

# राष्ट्रिय संस्कृत संस्थानम्
नवदेहली

गङ्गानाथ झा केन्द्रीय संस्कृत विद्यापीठ ग्रन्थमाला

॥ २ ॥

आङ्कोलकरलक्ष्मणभट्टविरचिता

# पद्यरचना

सम्पादकः
डा॰ जगन्नाथ पाठकः



**Rashtriya Sanskrit Sansthan**

*(Under the auspices of the Ministry of Education and Social Welfare, Govt. of India)*

**New Delhi**

**Ganganatha Jha**
**Kendriya Sanskrit Vidyapitha**
**TEXT SERIES**

*General Editor*

**Dr. G. C. Tripathi**

## No. 2

# PADYARACANĀ

*by*

Lakṣmaṇa Bhaṭṭa of Ankola

(An anthology of Sanskrit Subhāṣitas)

*Edited by*

Dr. Jagannath Pathak




ALLAHABAD

1979

राष्ट्रियसंस्कृतसंस्थानम्
( केन्द्रीयशिक्षामन्त्रालयस्याङ्गभूतम् )
देहली

—•—

गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठग्रन्थमाला

प्रधानसम्पादकः

गयाचरण त्रिपाठी

—•—

द्वितीयं प्रसूनम्

# पद्यरचना

आङ्कोलकरलक्ष्मणभट्टविरचिता

सम्पादकः

जगन्नाथ पाठकः

—•—

गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठम्
मोतीलाल नेहरू पार्क
प्रयागः-२

# पद्यरचना

(सुभाषितसङ्कलनम्)



सम्पादकः
डा॰ जगन्नाथ पाठकः




गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठम्
मोतीलाल नेहरू पार्क
प्रयागः-२

१९७९

# FOREWORD

The Vidyapeetha is happy to place in the hands of its readers this new edition of the *Padyaracanā*, an anthology of *Subhāṣitas*, compiled by Lakṣmaṇa-bhaṭṭa, a resident of Aṅkola in Maharashtra. In all probability, it is a work of the begnining of the 17th century. Padyaracanā was first published in the Kāvyamālā series in 1908. This edition, based barely on two manuscripts, is faulty in many respects. Taking in view the importance of the work, Dr. J. Pathak of this Vidyapeetha has attempted a fresh edition of the text by means of another three manuscripts, two procured from the Bhandarkar Oriental Research Institute, Poona and one from the personal Collection of Shri Prem-nath Tripathi of Mirzapur. Of these the last mentioned manuscript is of special importance. Not only does it represent the text more faithfully but also proves that the popularity of Padyaracanā was not confined to Maharashtra region only.

This new edition of Padyaracanā has the advantage of presenting much improved readings of the verses as well as of recording the variant readings. The importance of this edition has been considerably enhanced by the three appendices first of which gives a succint account of the poets whose verses have been incorporated in the text, the secoud one explains the more difficult expressions of the text and the third one is an alphabetical list of the verses together with their known sources. In this index Dr. Pathak has tried to give references to the appearance of many older verses in other subhāṣita-antholo-gies as well.

*Padyaracanā* is an excellent collection of verses which has been nicely planned according to subject matter. The selection of the verses has been done very judicionsly. Besides being a connoisseur of good poetry, Lakṣmaṇa Bhaṭṭa was himself an excellent poet as his many verses incorporated in this collection clearly prove. Out of a total number of 770 verses, he has composed more than one-seventh himself. In fact the number of verses of Lakṣmaṇa-

bhaṭṭa is much more than of any one poet which shows that the main aim before the compiler could well have been the propagation his own poetry and to get it established in the Subhāṣita literature.

I am not only amply satisfied but also very much pleased with the scholarly manner in which Dr. Pathak has carried out the task of editing this rare work and hope that our readers shall find this work useful in "driving away their boredom caused by excessive engagement with the dry scientific literature like *Nyāya*", as Lakṣmaṇabhaṭṭa puts it (I. 3).

Let *sahṛdayas* be pleased and thank Dr. Pathak for making this work available to them.

G. N. Jha K. S. Vidyapeetha
Allahabad-2
September 12, 1979

G. C. Tripathi
Principal

---

# प्रस्तुतिः

## (१) काव्यमालासंस्करणम्

आङ्कोलकरलक्ष्मणभट्टेन विरचितायाः 'पद्यरचनायाः' प्रथमतः प्रकाशनं मुम्बईतो निर्णयसागरीययन्त्रालये काव्यमालाया नवाशीतितमभागरूपेण १९०८ ख्रीस्तीयाब्दे सञ्जातम्। अस्याः पाण्डुलिपिद्वयमवलम्ब्य संशोधनं सम्पादनञ्च 'जयपुरमहाराजाश्रितेन महामहोपाध्यायपण्डितश्रीदुर्गाप्रसादतनयेन पण्डितकेदारनाथेन, मुम्बापुरनिवासिना पणशीकरोपाह्वलक्ष्मणतनुजनुषा वासुदेवशर्मणा च' विहितम्। संस्करणमिदं बहुष्वपि पद्येष्वक्षरभ्रंशदोषेण बहुवाश्च नानाकारणवशादशुद्धिग्रस्ततया सर्वथा पुनराकलनीयमिदानीञ्च दुष्प्राप्यमिति कृत्वा संयोगवशादस्माभिः पाण्डुलिपित्रयमवलम्ब्य सम्पाद्यमानं प्रस्तूयते विदुषां समक्षम्।

यद्यप्ययं सुभाषितसङ्ग्रहः सर्वथाऽर्वाचीनत्वेन, बहूनाञ्च पद्यरत्नानामन्येष्वपि प्रकाशितेषु सङ्ग्रहेषूपलभ्यमानत्वेन न तथोपयोगीति कैश्चित्प्रतिपद्येत, तथापि ग्रन्थकर्तुर्व्यक्तित्वं कृतित्वञ्च पुनर्विदुषां समक्षं यथासम्भवं प्रामाणिकतया प्रथमतः प्रस्तूयेत, इति भावनया प्रयत्नोऽयमस्माकं प्रेक्षावतां कदाचिदादरास्पदं स्यात्।

काव्यमालायां प्रकाशितस्य सङ्ग्रहस्यास्य सम्पादकाभ्यां सङ्ग्रहकारस्य लक्ष्मणभट्टस्य समयादिविषये न किञ्चित्स्पष्टीकृतम्। केवलं ताभ्यामिदमेव लिखितम्—"आङ्कोलकरोपनामकः श्रीलक्ष्मणभट्टः कदा समुत्पन्न इति प्रमाणानामनुपलम्भान्न शक्यते निर्णेतुम्, परं नायमेकस्माद् वर्षशतकादर्वाचीन इति शक्यते वक्तुम्। यदाधारेणास्याः पद्यरचनाया मुद्रणं जातं तत्पुस्तकद्वयमपि शताद् वर्षेभ्यः प्राचीनेषु पत्रेषु लिखितमिति। कविरयं जात्या महाराष्ट्रो भवेत्।"

आउफ्रेख्टमहाशयेन स्वकीये 'कैटलागस कैटलागरम' नाम्नि ग्रन्थे पद्यरचनाया विषये केवलमिदमेव सूचितम्—

"cc 1, 324—पद्यरचना, Metrics, by लक्ष्मणभट्ट.........."। परं, काव्यमालायां प्रकाशितेन संस्करणेन पद्यरचना न कश्चित् छन्दोग्रन्थ इति सिद्धम्।

## (२) पाण्डुलिपिसामग्री

पूनास्थभाण्डारकरप्राच्यशोधसंस्थानतः पद्यरचनाया देवनागरीलिपिनिबद्धं पाण्डुलिपिद्वयमुपलब्धमस्माभिः । एका पूर्णा चतुःपञ्चाशत्पत्रपरिमिता । अस्या विशेषपरिचयः—

726 of 1886--92 (New No. 19). 31X14.7 cen 12 lines per page, 36 letters per line.

अन्तिमपत्रतो ज्ञायते यदियं १७९७ वैक्रमाब्दे (तदनुसारं, १७४० ख्रीस्तीयाब्दे) जयपुरे लिपीकृता । लिपिकारोऽयं नितरां संस्कृतानभिज्ञः प्रमादपरवशश्च प्रतिभाति । न केवलं तेन ग्रन्थस्य लिपिकरणेऽपरिमितानि स्खलनानि कृतानि, परं यत्र तत्र पङ्क्तयोऽपि परित्यक्ताः । अपेक्षिता विसर्गादयोऽपि प्रायस्त्यज्यन्ते संस्करणेऽस्मिन् पाण्डुलिपिरियं 'क' इत्यभिहिता ।

अपरा पाण्डुलिपिः खण्डिता द्वाचत्वारिंशत्पत्रमात्रपरिमिता । विशेषपरिचयः —

148 of 1882-83. 24X10.5 Cen 10 lines per page 31 lettes per line.

अस्याश्च लिपिकारः प्रथमापेक्षया प्रबुद्धः सावधानश्च प्रतिभाति । पाण्डुलिपिरियं 'ख' इत्यभिहिता । तृतीया खण्डिता देवनागरीलिपिनिबद्धा पाण्डुलिपिः उत्तरप्रदेशीयमिर्जापुरमण्डलान्तर्गतखटखरियाग्रामवास्तव्यपण्डितप्रेमनाथत्रिपाठिमहोदयानां गृहात् समुपलब्धा । इयं ८७ पत्रं यावदुपलभ्यते । मध्ये यानि पत्राणि नोपलब्धानि तेषां संख्यामात्रनिर्देशः क्रियते यथा—३, २७, २९, ३०, ४२, ४३, ४८, ४९, ५४—६६, ६९, ७०, ७९, । एवं चतुर्विंशतिपत्राणि न सन्ति । पाण्डुलिपिरियं 'ग' इत्यभिहिता ।

'क' प्रतौ ग्रन्थसमाप्तौ समग्रस्यैव ग्रन्थस्य विषयनिर्दशः कृतो वर्तते । अन्ते च पद्यद्वयमिदं लिखितम्—

तदेतैर्व्यापारैरियमुपचिता पञ्चदशभि—<br>
र्लसच्छ्रीः श्रीमल्लक्ष्मणविरचिता पद्यरचना ।<br>
समुद्योतं धत्तां त्रिजगति शरच्चन्द्रचलिता<br>
समिद्धा ज्योत्स्नेव प्रथिततिथिभिः पञ्चदशभिः ॥<br>
कौमुदी कौमुदी (दा ?) नीव कामुकानिव कामिनी ।<br>
आनन्दयतु मे पद्यरचना चतुरान्नरान् ॥ समाप्तेयं पद्यरचना ।

द्वितीये पद्येऽस्मच्छब्दप्रयोगबलात्पद्यद्वयमिदं श्रीलक्ष्मणभट्टस्येत्यत्र नास्ति सन्देहः,

परं काव्यमालासंस्करणे नास्त्येवैतयोर्निर्देशः। एवमितः पद्यद्वयात् पूर्वं 'क' प्रतौ यो वर्णितानुक्रमनिर्देशः कृतः, सोऽपि मन्ये लक्ष्मणभट्टेनैव लिखितः स्यात्। संस्करणेऽस्मिन् ग्रन्थाभिन्नतया स्वीकृत्यास्माभिर्नियोजनं कृतम्।

प्रस्तुतस्य पद्यरचनायाः संस्करणस्य काव्यमाला (*कामा*) संस्करणमाधारभूतम्। याश्च भ्रमादिप्रयुक्ताः पाठाशुद्धयोऽक्षरभ्रंशादयो दोषास्तत्सर्वं यथासम्भवं निराकृतम्।

## (३) लक्ष्मणभट्टः

श्रीमद्भिः पी० के० गोडेमहाशयैरेकस्मिन् स्वकीये लेखे[1] पद्यरचनाया लेखनकालः तस्यामुपलब्धस्याकबरीयकालिदासस्य (श्रीगोविन्दभट्टस्य ?) पद्यद्वयस्याधारेण १६१० तः १७१० ख्री० इत्यनयोर्मध्यवर्तीति निर्धारितः। सम्भवतो मुगलसम्राजः अकबरस्य (१५५६-१६०५ ख्री०) आश्रितो रामचन्द्रयशःप्रबन्धनाम्नो ग्रन्थस्य रचयिता कविरकबरीयकालिदास आसीत्। अथ च जयपुरतः प्राप्ताया मातृकायाः कालः १७४० ख्री० वर्तते। एवं ख्रीस्तीयसप्तदशशताब्द्या उत्तरार्धकाल एवास्य श्रीलक्ष्मणभट्टस्य भवितुमर्हति। अन्यच्च, १६६० ख्रीस्तीयाब्दे गदाधरभट्टेन लिखिते 'रसिकजीवन'नाम्नि सङ्ग्रहेऽप्यकबरीयकालिदासस्य पद्यद्वयमुपलभ्यते।

कृष्णमाचार्यमहाशयेन[2] पद्यरचनाया लेखको लक्ष्मणभट्टः श्रीहर्षकृतनैषधकाव्यस्य टीकाकारत्वेन निर्दिष्टः। गोडेमहाशयस्य निर्देशानुसारं, कॅट. आफ जम्मू मॅन्युस्क्रिप्ट्स् नाम्नि ग्रन्थे नैषधीयचरितस्य टीकाया गूढार्थप्रकाशिकाया लेखको लक्ष्मणभट्टशर्मा रामकृष्णभट्टस्य सूनुरासीत्। पद्यरचनायां लक्ष्मणेन स्वपितुर्नामोल्लेखो न कृतः। गोडेमहाशयोऽस्य लक्ष्मणभट्टस्य समयं १४३१-१७३० ख्री० इति निर्दिशति।

आउफ्रेख्टमहाशयेन पद्यरचनाया लेखको लक्ष्मणभट्टः रत्नमालानाम्नो ग्रन्थस्यापि लेखकत्वेन निर्दिष्टः।[3] आर० मित्रमहोदयेनापि ३५४ संख्यापरिमितपद्यरूपाया रत्नमालाया निर्देशः कृतः,[4] किन्तु तत्रापि लक्ष्मणस्य पितुर्नाम नास्ति निर्दिष्टम्।

---

१ जर्नल ऑफ ओरियंटल रिसर्च (मद्रास) XV 184-193. तथा 'स्टडीज इन इन्डियन लिटरेरी हिस्ट्री, II 340-348.

२. 'हिस्ट्री आफ क्लासिकल संस्कृत लिट्रेचर, इत्यस्मिन् ग्रन्थे।

३. सी. सी. १. ५३६

४. "Collection of miscellaneous verses illustrating particular rhetorical maxims, with many riddles and emigmas." (vol. VI of Notices, 1882)।

एवं पद्यरचनाकर्तुर्लक्ष्मणस्य रत्नमालाकर्तुश्च लक्ष्मणस्याभेदो वेति निश्चेतुं न कश्चन साधको बाधको वा तर्कः सम्प्रतिभाति। यद्यपि पद्यरचनायां मङ्गलाचरणे भगवतः शङ्करस्य स्तुतिरूपनिबद्धाऽस्ति, रत्नमालायां कृष्णस्तुतिपरं पद्यं वर्तते इति गोडेमहाशयेन द्वयोर्भेद-साधकस्तर्कः प्रदत्तस्तथापि ५७४ संख्यके पद्ये 'ध्यातं वित्तमहर्निशं नियमितप्राणैर्न शम्भोः पदं' इति काव्यमालासंस्करणगते पाठे क-ख-ग प्रतिषु 'न च पुनर्विष्णोः पदं शाश्वतं' इति पाठान्तरमुपलभ्यत इति लक्ष्मणस्य कृष्णपरत्वमपि सिद्ध्येदिति। पद्यरचनायां लक्ष्मणस्य नाम्ना निर्दिष्टं 'इयं चिद्रूपाऽपि०' (४२) इत्यादि गङ्गास्तुतिविषयकं पद्यं हरिभास्करेण १६७३ ख्रीस्तीयाब्दे विरचितायां 'पद्यामृततरङ्गिण्यां' समुद्धृतं वर्तते। अनेनाधारेण गोडे-महाशयैर्लक्ष्मणभट्टस्य समयः १६१० तः १७१० ख्री० यावत् निर्धारितः।

आङ्कोलकरलक्ष्मणभट्टोऽयं महाराष्ट्रदेशवास्तव्य इति पद्यरचनायाः काव्यमाला-संस्करणस्य सम्पादकाभ्यामुक्तमेव। नासिकवास्तव्यो हरिभास्करोऽपि पूर्ववर्तिनो लक्ष्मण-भट्टस्य कृतित्वेन परिचितः स्यादेव। गोडेमहाशयानुसारं, महाराष्ट्रस्य बेलगांवमण्डले चिको-डीतालुकायां 'अंकोल' नामा ग्रामो वर्तते। 'अंकोळ' एव 'अंकोल' इति भवेत्। 'कर' प्रत्य-योऽपि लक्ष्मणभट्टं महाराष्ट्रवास्तव्य इति साधयति। पद्यरचनायाः पाडुलिपीनां जयपुरे (राजस्थाने) मिर्जापुरे (उत्तरप्रदेशे) महाराष्ट्रे च समुपलभ्यमानत्वं कृतेरस्या लोकप्रियत्वं व्यनक्ति।

## (४) निर्माणोद्देश्यं वैशिष्ट्यञ्च

ग्रन्थकर्त्रा सुभाषितसङ्ग्रहस्यास्य निर्माणोद्देश्यं स्वशब्देनैव स्पष्टीकृतम्। तथा च

**तर्कज्ञानां तर्कशास्त्रार्कसम्पत्सम्पर्केण क्लिश्यमानान्तराणाम्।**
**विश्रान्त्यर्थं सङ्गता कल्पशाखिच्छायेवेयं निर्मितिर्लक्ष्मणस्य ॥३॥**

नव्यन्यायस्य पुष्कलप्रभाव इतरेष्वपि शास्त्रेषु तस्योद्भवेन सहैव प्रतीतिगोचरी-भवति। नैयायिकी तर्कसहगता प्रकृतिः सुकुमारप्रतिभाजुषोः कविसहृदययोः कृते सर्वथा रसाकलने कमपि प्रतिघातमुत्पादयति। अतएव 'कविकण्ठाभरणे' श्रीमता क्षेमेन्द्रेण कवि-त्वाभ्यासशालिनः प्रबोधिताः शब्दैरेभिः—

**काव्याधिवासप्रथमोद्गमश्च रक्षेत्पुनस्तार्किकगन्धमुग्रम्।**

ये सर्वथा शास्त्राणामेवाकलनं निरन्तरं कुर्वते तेऽपि सर्वात्मना विश्रान्तिं कामयमानाः काव्यं कुर्वतेऽधीयते च। शुष्कतर्कजालग्रथितशास्त्राणां प्रभावस्य फलतया काव्यशास्त्रमपि

शनैः शनैः प्रभावितं सञ्जातम् एवं सर्वथाऽऽलोचयतैव लक्ष्मणभट्टेन तर्कशास्त्रार्कसम्पर्कसम्पर्केण क्लिश्यमानान्तराणां तर्कज्ञानां विश्रान्त्यर्थमियं 'पद्यरचना' वि चितेति सामायिकत्वमस्या व्यञ्जितं भवति । एवमेव श्रीहर्षकृतखण्डनखण्डखाद्यस्य टीकाकारेणोद्भटमैथिलविदुषा श्रीशङ्करमिश्रेण रसार्णवनाम्नः काव्यस्यारम्भे लिखितम्—

तर्काभ्यासपरिश्रान्तस्वान्तविश्रान्तिहेतवे ।
ये श्लोका विहितास्तेषां सङ्ग्रहोऽयं विधीयते ॥

अनयोरन्तरं मात्रमेतावदेव वर्तते यत् श्रीमता लक्ष्मणभट्टेन परेषां स्वान्तस्य विश्रान्त्यर्थं पद्यरचनाया निर्माणं कृतम्, श्रीशङ्करमिश्रवर्यैस्तु स्वकीयस्य स्वान्तस्य विश्रान्तिहेतवे रसार्णवनिर्माणरूपः प्रयासः कृतः । अस्मिन्नुक्तिद्वये स्पष्टतया संवादः संधातुं शक्यते ।

अन्यच्च, परम्परागतपुराणकाव्यानां चर्वितचर्वणं विहाय लक्ष्मणस्य नवीनायाः कृतेराकलने समृद्धादरा विज्ञा भवेयुरित्यपि लक्ष्यभूतं ग्रन्थकारस्य । एवञ्च, कवीनामन्येषां पद्यानामपेक्षया स्वकीयानामेव पद्यानामाधिक्येनोद्धरणेन प्रस्तुतकाव्यसङ्ग्रहरूपरचनायाः स्वकृतितया प्रख्यापनेन च लक्ष्मणभट्टस्य सहृदयानां समुदायस्य स्वकीयेन कवित्वेन स्वम्प्रत्याकर्षणमभिमतमासीदिति कल्पयितुं शक्यते । ग्रन्थेऽस्मिन् प्रारम्भ एव 'ममैव लक्ष्मणस्य' इति निर्देशो ग्रन्थकारविषयक इत्यत्र नास्ति सन्देहः । प्राचीनानां पद्यैः सह स्वकीयस्य कवित्वस्य सहृदयहृदये प्रतिष्ठाऽपि लक्ष्मणस्याभीष्टेति प्रतिपत्तुं शक्यते । ज्ञातव्यं यदत्र सार्धशतसंख्यापरिमितानि पद्यानि लक्ष्मणभट्टस्यैव सन्ति ।

अस्य पद्यानां सामग्र्येणाकलने विधीयमाने शिवलीलार्णवे नीलकण्ठदीक्षितस्योक्तिरियं सर्वात्मना सार्थकतामावहन्तीव परिलक्ष्यते—

यानेव शब्दान् वयमालपामो यानेव चार्थान् वयमुल्लिखामः ।
तैरेव विन्यासविशेषभव्यैः सम्मोहयन्ते कवयो जगन्ति ॥१/१३

यथैव शब्दानां नियोजनायां कविरयं जागरूकः प्रतीयते तथैवार्थजन्यचमत्कारेण सचेतसां हृदयमाह्लादपरवशतामानेतुमपि प्रभवतीति सर्वत्राकलयितुं शक्यम् ।

शब्दालङ्कारेष्वनुप्रास इव श्लेषोऽप्यनेनापृथग्यत्नतया निर्वाह्यते । 'अधिपञ्चवटी'त्यादि (१७) पद्येऽनुप्रासो वटीकुटीवर्तिमूर्त्यादौ, 'लक्ष्मणलोचनैकलक्ष्यं' इत्यत्र सहजभावेन व्यज्यमानः श्लेषश्च कवेः शक्तिमत्त्वं व्यङ्क्तः । शम्भोस्ताण्डवरूपे पद्ये (२९) अनुप्रासस्य निर्वाहः कवेः काव्यनिर्माणसामर्थ्यस्याकलनायालम् । यौगपद्येनानेकेषां भावानामेकस्मिन् दृग्व्यापारे

निर्देशो 'देव त्वद्यशसे'ति (५३) पद्ये कवेः सूक्ष्मेक्षिकां सूचयति । प्रश्नस्याशङ्कायाश्चाविर्भावं कृत्वा समाधानं सहृदयपक्ष एव स्थापयता, 'स्तब्धेऽर्धाङ्गे०' (२६) 'रघुतिलक०' (६४) इत्यादौ च कविना स्वकीयो व्यङ्ग्यार्थपक्षपातः सङ्केतितः । मन्ये, कविना पद्यरचनाया निर्माणप्रसङ्गे नैव प्रासङ्गिकानि पद्यानि लिखितानि । यतः, 'अथारिनारी' इति लिखित्वा 'समस्तावनीत्यत्र (१४१) 'स्फुटतरमटवीनामि'त्यत्र (१४२) च कर्त्र्या अरिनार्या उल्लेखो नास्ति । तयोररिनारीति प्रसङ्गोत्थापनार्थमुक्तः शब्द आक्षिप्यते । लक्ष्मणभट्टस्य नास्त्येकमपि पद्यं यदुक्तिचमत्कारविरहितं प्रतीयते । रूपकालङ्कारेण तरललोचनाया अपाङ्गरङ्कोः प्रातिस्विकं गतागतकुतूहलं कविना वर्णितमित्याकलनीयं सहृदयैः (१९२) ।

एवमाद्योपान्तं क्वचित्कविकुलगुरुं कालिदासं मधुरकोमलकान्ताभिः पदावलीभिरनुसरन्ती, क्वचिन्नवनवशब्दगुम्फनजन्यचमत्कारेण माघस्य स्मारयन्ती, क्वचन लालित्येन भवभूतिमनुकुर्वाणा श्रीलक्ष्मणभट्टकाव्यचातुरी सर्वत्रैव प्रतीतिपथमवतरन्ती विलसति । पद्यरचनायाः समाप्तौ कविव्रजमधुव्रतस्य कृते विश्रान्तिस्थानमिदमिति यदभिहितं तत्सर्वथा सार्थकमित्यत्र नास्ति संशीतिलवः (७७०) ।

अन्यच्च, सुभाषितसङ्ग्रहेऽस्मिन् कवीनां यानि पद्यानि सङ्कलितानि तेष्वपि 'संग्रह त्याग न बिनु पहिचाने' इत्युक्तरीत्या कवेः संवेदनशालिनी सूक्ष्मेक्षिकैव परिलक्षिता भवति ।

## (५) सुभाषितानि सुभाषितग्रन्थाश्च

सामान्येन समयोचिताः सूक्तयः सर्वास्वेव भाषासु लभ्यन्ते । प्राचीनादेव कालात् भारतीयाः सूक्तिप्रियाः सन्ति । किन्तु प्रथमवारं सुभाषितानि महाराष्ट्रप्राकृतभाषया निबद्धायां हालसातवाहनस्य गाथासप्तशत्याम्, ततश्च वज्जालग्गनाम्नि ग्रन्थे सङ्ग्रहरूपेण लभ्यन्ते । सुभाषितानि बहुविधानि भवन्ति—यत्र केवलमुपदेशमात्रस्य कस्यचित्प्राधान्यं भवति तदपि सुभाषितं भवति। यथा पञ्चतन्त्रादिषु भर्तृहरेर्नीतिशतकादिषु लभ्यन्ते पद्यानि । परन्तु येषु कश्चन काव्यजन्यश्चमत्कारोऽपि प्रसङ्गवशादभिहितेषु लभ्येत तेषां काव्यदृष्ट्या विशेषेण महत्त्वं स्वीक्रियते । एतादृशस्यैव सुभाषितस्य विषये महाकविना बाणभट्टेन 'कादम्बर्याः' प्रस्तावनायां लिखितम्—

> सुभाषितं हारि विशत्यधो गलान्न दुर्जनस्यार्करिपोरिवामृतम् ।
> तदेव धत्ते हृदयेन सज्जनो हरिर्महारत्नमिवातिनिर्मलम् ॥

पद्यरचनायां काव्यरूपाण्येव प्रायः सुभाषितानि संगृहीतानि निर्मितानि च ग्रन्थकारेण । एवंविधा अनेके प्राचीनाः सुभाषितसङ्ग्रहग्रन्थाः संस्कृतसाहित्ये विराजन्ते । तेषु कतिपयेषां संक्षेपेण निर्देशः क्रियते ।

**१—विद्याकरस्य सुभाषितरत्नकोशः**—ख्रीस्तीयैकादश शताब्द्यां द्वादशशताब्द्यां वा ग्रथितः। अयमेव प्रथमं इ० डब्ल्यू० थामसमहाशयेन विकीर्णतालपत्राणामाधारेण प्रथम (१९१३ ख्री०) कवीन्द्रवचनसमुच्चय इति नाम्ना प्रकाशितः। इदानीं डी० डी० कौसाम्बी-वी० वी० गोखलेमहाशयाभ्यां सुसम्पाद्य 'हार्वर्डयुनिवर्सिटी प्रेस' कैम्ब्रिजतः (१९६७ ख्री०) डानियल इंगिल्समहाशयेन चानूद्य (१९६५) प्रकाशितः। अन्यश्चास्यैवानुकरणरूपो नन्दनेन ग्रथितः 'प्रसन्नसाहित्यरत्नाकर' नामा सुभाषितग्रन्थो वर्तते यो नाद्यावधि प्रकाशितः।

**२—सदुक्तिकर्णामृतम्**—अयं वंगदेशे १२०५ ख्रीस्तीयाब्दे श्रीधरदासेन सङ्कलितः, अद्यावधि वारत्रयं विद्वद्भिः सम्पाद्य प्राकाश्यं नीतः सु० ग्रन्थः।

**३—सूक्तिमुक्तावली**—लक्ष्मीधरस्य पुत्रेण भगदत्तजल्हणेन ख्रीस्तीयत्रयोदश-शताब्दयां (१२५८) संग्रथिता, एम्बारकृष्णमाचार्यमहोदयैः सम्पाद्य गायकवाड ओरियंटल-सिरीजतः प्रकाशिता।

**४—शार्ङ्गधरपद्धतिः**—इयं पीटर्सनमहाशयैः मुम्बईतः सम्पाद्य १८८८ ख्रीस्ती-याब्दे प्रकाशिता। इयं १३६३ ख्रीस्तीयाब्दे शार्ङ्गधरेण सङ्कलितेत्युच्यते। 'बृहच्छार्ङ्गधरप-द्धति'नामा ग्रन्थोऽपि काशीतः प्रकाशितः (१८७५ ख्री०)।

**५—सुभाषितावली**—वल्लभदेवस्यायं सुभाषितग्रन्थः पीटर्सनमहाशयेन पं० दुर्गा-प्रसादेन च सम्पादितो मुम्बईतः प्रकाशितः (१८८६ ख्री०)। ख्रीस्तीयपञ्चदशशताब्दीतः पूर्वमियं संग्रथितेति कल्पयितुं शक्यते।

**६—सुभाषितावली**—इयं ख्रीस्तीयपञ्चदशशताब्द्या उत्तरार्द्धे समुत्पन्नेन श्रीवरेण सङ्कलिता।

एवमन्ये सुभाषितग्रन्थाः सन्ति—७. रूपगोस्वामिनः पद्यावली, ८. हरिहरस्य सूक्ति-मुक्तावली, ९. श्रीहरिकवेः सुभाषितहारावली (अप्रकाशिता), १०. शृङ्गारालापः (अप्र०), ११. मणिरामस्य श्लोकसङ्ग्रहः (अप्र०), ११. गदाधरस्य रसिकजीवनम्, १२. गोविन्दजितः सभ्यालङ्करणम्, १३. वेणीदत्तस्य पद्यवेणी, १४. हरिभास्करस्य पद्यामृततरङ्गिणी, १५. सुन्दरदेवस्य सूक्तिसुन्दरः, १६. विद्याकरमिश्रस्य विद्याकरसहस्रकम्।

## (६) सम्पादनसम्बद्धं किञ्चित्

ग्रन्थेऽस्मिन् यथासम्भवं काव्यमालासंस्करणस्य पाठाः स्वीकृताः। येषां विषये कश्चित् सन्देहः समुत्पन्नस्ते टिप्पण्यां निक्षिप्ताः। यत्र ममैकस्मिन् स्थले विशेषेण भ्रमः समुत्पन्नः तदस्ति 'नाशिष्यः किमंभूदि'ति पद्यम् (१५)। तत्र द्वितीये चरणे रामप्रभेत्यत्र रामत्रपेति,

चतुर्थे च चरणे 'दण्डाहतेनाब्धीनां स मया यमोऽपि महिषेणाम्भांसि नोद्वाहितः ।' इति पाठान्तरेषु सुभाषितसुधाभाण्डागारे सुभाषितरत्नभाण्डागारे च समानेषु लब्धेष्वपि काव्यमालासंस्करणस्था एव पाठाः स्थापिताः । साम्प्रतं जोधपुरस्थराजस्थानप्राच्यविद्याप्रतिष्ठानतः प्रकाशितायां 'खण्डप्रशस्तौ' कीकापण्डितस्य गुणविनयस्य च व्याख्यानद्वयमुपलब्धमस्माभिः । तच्च सर्वं परिशिष्टे प्रस्तुतासु टिप्पणीषु दीयते । अस्मत्सुहृद्भिः प० विश्वनाथमिश्रवर्यैः (बीकानेरस्थशार्दूलसंस्कृतविद्यापीठस्य प्राचार्यैः) अपि पद्यस्यास्य स्वमत्या व्याख्यानमुपनिबद्ध्य प्रेषितमिति तदपि तत्रैव नियोजितमस्माभिः ।

एवं बहुषु स्थलेषु पूर्वभ्रमेषु निराकृतेष्वपि प्रमादालस्यादिदोषवशात्केचन दोषाः सम्पादनेऽस्मिन् सम्भाव्येरन् । तदेतत्सर्वं क्षमापुरःसरं निराकरिष्यन्ति सुधिय इत्याशासे ।

## (७) आभारनिवेदनम्

यैः पद्यरचनायाः काव्यमालासंस्करणं सुलभतां नीतमस्माकं कृते ते सन्ति प्रयागस्थाः संस्कृतगीतकाराः 'सङ्गमनी' सम्पादकाः श्रीप्रभातशास्त्रिणः । तान्प्रत्यहमात्मानं साभारमनुभवामि । श्रीयुतश्रीमन्नारायणद्विवेदिनो यथासमयं वेणीदत्तस्य भोगिसूनोर्विषये लिखितं शर्ममहोदयानां लेखं प्रदाय सम्पादनक्रमे मदीयश्चिन्ताभरो लघूकृत इति तान् प्रत्यपि मदीया कृतज्ञता वरीवर्ति । अस्मत्सुहृद्भ्यां डॉ० किशोरनाथझा—डॉ० राघवप्रसादचौधरीमहोदयाभ्यां यथासमयं स्वकीयेन सम्पादनपाण्डित्येनानुगृहीतोऽहमिति कृत्वा तयोरुपकारभरं सम्भावयामि । श्रीजीवेश्वरझामहोदयेन पूनास्थपाण्डुलिपिद्वयस्य सुलभीकरणे साहाय्यमाचरितमित्येतावता नितरामनुगृहीतोऽस्मि ।

अस्माकं हार्दिकस्य धन्यवादस्य भाजनानि सन्ति विद्यापीठस्यास्य प्राचार्या डॉ० गयाचरणत्रिपाठिवर्याः, यैर्निरन्तरमुत्साहितेन मयाऽस्मिन् सम्पादनकर्मणि यत्किञ्चित्साफल्यमवाप्तमिति तेषामौदार्यमन्तःप्रवेशक्षमां शोधप्रतिभाञ्चाकलय्य किमपि विलक्षण इव जायते चित्तप्रसादः ।

शाकुन्तलमुद्रणालयस्याधिपतिना श्रीउपेन्द्रत्रिपाठिना निरन्तरं परिश्रम्य यथासमयं ग्रन्थोऽयं मुद्रित इति तस्यौन्नत्यमभिलषन् धन्यवादं वितरामि ।

प्रयागः, २३-३-७९ ]

जगन्नाथपाठकः

# पद्यरचनाया विषयानुक्रमः

अथ प्रथमो व्यापारः

## अथ द्वितीयो व्यापारः



## अथ तृतीयो व्यापारः



## अथ चतुर्थो व्यापारः

अथ सप्तमो व्यापारः



अथाष्टमो व्यापारः

अथैकादशो व्यापारः



अथ द्वादशो व्यापारः

अथ त्रयोदशो व्यापारः



अथ चतुर्दशो व्यापारः

•••

आङ्कोलकरलक्ष्मणभट्टविरचिता




## प्रथमो व्यापारः

१ [1]वक्त्राम्भोरुहपञ्चकं विकचयन्नेत्रत्रयं दर्शयँ-
ल्लालाटं दहनं स्फुटं प्रकटयंस्तोयं कचैर्मोचयन् ।
बालं चन्द्रमुदश्चयन् विरचयन्[2] द्राक् ताण्डवाडम्बरा-
नाश्च[3]र्याणि निदर्शयञ्जगदयं पायान्नटो धूर्जटिः ॥१॥

२ कवित्वप्रौढगुम्फ[4]श्रवणकृतभम्पव्यतिकरं
चिरं येषां स्वान्तं समजनि नितान्तं रसवशम् ।
अमीषां पीयूषापचितसुरयोषाधरपुटो-
ल्लसन्माधुर्ये वा समुदयति किं वा रतिरपि ॥२॥

३ तर्कज्ञानां[5] तर्कशास्त्रार्कसम्पत्सम्पर्केण क्लिश्यमानान्तराणाम्[6] ।
विश्रान्त्यर्थं सङ्गता[7] कल्पशाखिच्छायेवेयं निर्मितिर्लक्ष्मणस्य ॥३॥

४ विज्ञास्तु विज्ञाप्यमिदं पुराणपद्येषु किं चर्वितचर्वणेन ।
यद्यस्ति कौतूहलमीक्षणीया क्षणं कृतिः सम्प्रति लक्ष्मणीया[8] ॥४॥

---

१. क इतः पूर्वं 'श्रीगणेशाय नमः । श्रीभवान्यै नमः' ग 'श्रीगणेशाय नमः' इति लिखति ।
२. क प्रतिपदं (इदमन्यया लेखन्या लिखितमिव प्रतिभाति) । ३. क °म्बराण्याश्च° ।
४. क कवीनां वाग्गुम्फ° । ५. क °ज्ञानं । ६. क °मानं नराणाम् । ७. क ग कल्पतां ।
८. क °क्ष्मणस्य ।

५ प्राज्ञाः कापि[1] प्रतिज्ञापि तथा वै[2] करवै यथा।
बुधा अपि सुधास्वादं लभन्ते विबुधा इव ॥५॥

—ममैव[3] लक्ष्मणस्य[4]

**अथावतारेषु मत्स्यः**

६ पुच्छं चेदह[5]मुत्क्षिपाम्यनवधिस्तुच्छीभवेदम्बुधिः
क्रीडां चेत्कलये मनागपि जले पीडा परं यादसाम्।
निःस्पन्दो भृशमास्थशञ्जिति[6] भरब्रह्माण्डभाण्डक्षय-
क्षोभात्कुञ्चितवेष एष भगवान् प्रीणातु मीनाकृतिः ॥६॥

**अथ कूर्मः**

७ पायान्मायाजरठकमठाधीश्वरो ब्रह्मनित्या-
धिष्ठानोच्चैर्मठ इव महान् पत्तने पन्नगानाम्।
धत्ते धन्या यदुपरि धरा शेषशीर्षोषिता[7]ऽसौ
कन्दोन्मीलन्नवकमलिनीकाण्डपत्रस्य लक्ष्मीम् ॥७॥

८ दृग्भ्यां यस्य विलोकनाय जगतो द्रागीषदुत्तोलित-
ग्रीवाग्रोपरि विस्फुरद्ग्रहगणे छत्रायितायां भुवि।
हा धिग्भूः किमभूदभूत्तदितरत् किं वेति पर्याकुलो
हन्यादेष हठादघानि कमठाधीशः कठोराणि मे ।८॥

**अथ वराहः**

९ यस्यालीढमृणालतन्तुवदियं दन्तोपरि स्वर्धुनी
दृक्कोणोषितदूषिके इव नभस्येतौ विवस्वद्विधू।
किञ्च स्निग्धसटाग्रलग्ननलिनीपत्राभमेतन्नभः
सोऽयं कोलकलेवरः कलयतां कल्याणमव्याहतम् ॥९॥

—रामचन्द्रस्यैते[8]

---

१. क। काचित्। २. क °पि। ३. क ग ममैते। ४. क ग 'लक्ष्मणस्य' इति नास्ति।
५. क चेदिद°। ६. का-मा निःस्यन्दो भृशमात्रनिर्भर°। ७. क °शीर्षेऽर्पिता।
८. क इ(ए?)ते रामचन्द्रोपाध्यायानाम्।

१० भूयादेष सतां हिताय भगवान् कोलावतारो हरिः
सिन्धोः क्लेशमपास्य यस्य दशनप्रान्ते नटन्त्या भुवः[1] ।
तारा हारति वारिदस्तिलकति स्वर्वाहिनी माल्यति
क्रीडादर्पणति क्षपापतिरहर्देवश्च ताटङ्कति ॥१०॥

—भानुकरस्य[2]

## अथ नृसिंहः

११ आह्लादयत्वेष खरैर्नखाग्रैर्दैतेयवक्षःखनिमु[3]त्खनन् वः ।
प्रह्लादहृद्यं हृदये द्वितीयमन्वेष्टुमिच्छन्निव सूनु[4]रत्नम् ॥११॥

—लक्ष्मणस्य

१२ पायान्मायामृगेन्द्रो जगदखिलमसौ यत्तनूदभ्रदर्चि-
र्ज्वालाजालावलीढं वत भुवि सकलं व्याकुलं किं न भूयात् ।
न स्याच्चेदाशु तस्याधिकविकटसटाकोटिभिः पाट्यमाना-
दिन्दोरानन्दकन्दात्तदुपरि तुहिनासारसन्दोहवृष्टिः ॥१२॥

—रामचन्द्रस्य[5]

## अथ वामनः

१३ किं क्रमिष्यति किलैष वामनो यावदित्थमहसन्न दानवाः ।
तावदस्य न ममौ नभःस्थले[6] लङ्घिताकशशिमण्डलः क्रमः ॥१३॥

— माघस्य

## [7]अथ भार्गवो रामः

१४ रामे ब्राह्मणवेषधारिणि धनुर्धृत्वा कराम्भोरुहे
शिञ्जिन्या गुटिकास्त्रमारचयितुं कैलासमाकर्षति ।
तात त्राहि सुत प्रयाहि दयिते निर्याहि सौधाद्बहि-
र्वारं वारमथं पुरान्तकपुरक्षोभः शिवायास्तु वः ॥१४॥

—भानुकरस्य

---

१. क प्रान्तेर्नटत्या भुवा । २. क °करमिश्रस्य । ३. ग °स्थलिमु° । ४. क °नवसूनु° ।
५. क °चन्द्रोपाध्यायानाम् । ६. क °भस्तले । ७. क प्रतौ इतः पूर्वं पद्यमिदमस्ति—

१५ नाशिष्यः किमभूद् भवः किमभवन्नापुत्रिणी रेणुका
नासीद् विश्वमकार्मुकं किमिति सा[1] प्रीणातु रामत्रपा[2] ।
विप्राणां प्रतिमन्दिरं मणिगणोन्मिश्राणि दण्डाहते-
नाब्धीशः समया[3] यमोऽपि महिषेणाम्भांसि नोद्वाहितः ॥१५॥

१६ द्वारे कल्पतरून् गृहेषु सुरभीश्चिन्तामणीनङ्गदे
पीयूषं सरसीषु वक्त्रकुहरे विद्याश्चतस्रो दश ।
यः किं कर्तुमयं तपस्यति भृगोर्वंशावतंसो मुनिः
पायाद् वोऽवनिदेवपालनपरो भूदेवभूषामणिः ॥१६॥

—महानाटकात्

## अथ दाशरथी रामः

१७ अधिपञ्चवटीकुटीरवर्ति स्फुटितेन्दीवरसुन्दरोरुमूर्ति ।
अपि लक्ष्मणलोचनैकलक्ष्यं भजत ब्रह्म सरोरुहायताक्षम् ॥१७॥

—लक्ष्मणस्य

१८ बालक्रीडनमिन्दुशेखरधनुर्भङ्गावधि प्रह्वता
नेकैतद्वनसे[4] वनावधि कृपा सुग्रीवसख्यावधि ।
आज्ञा वारिधिबन्धनावधि यशो लङ्केशनाशावधि
श्रीरामस्य पुनातु लोकवशता जानक्युपेक्षावधि ॥१८॥

—कस्यापि

१९ नियमितपाथोनिधिना प्रत्यावृत्तेन रामचन्द्रेण ।
अथ लङ्घिताः पदाभ्यां सरितो भयवामनीभूताः ॥१९॥

—भानुकरस्य[5]

---

बिम्बं चण्डरुचो विधाय परशुं दण्डीकृताहीश्वरं
राम(मे) खेलति खेटकाय कनकक्षोणीधरं पश्यति ।
दीर्घश्वासजुषां विलोलवपुषां विम्लानवक्त्रत्विषां
बाष्पक्षालितचक्षुषां दिविषदां सेवाञ्जलिः पातु वः ॥

—भानुकरस्यैतौ

( १. वः, २. °त्रपा, ३. °नाब्धीनां स मया – इति सुभाषितसुधाभाण्डागारस्थाः पाठाः । )
४. क नानै(ना?)काननसे° । ५. क °मिश्रस्य ।

### अथ हली रामः

२० निष्पात्याशु हिमांशुमण्डलमधः पीत्वा तदन्तःसुधां
कृत्वैनं चषकं हसन्निति हला[1]पानाय कौतूहलात्[2] ।
भो देव द्विजराजि मादृशि सुरास्पर्शोऽपि न श्रेयसे
मा[3] मुञ्चेति तदर्थितो हलधरः पायादपायाज्जगत् ॥२०॥

२१ क्रीडन्नद्यानवद्यामहमुपरि गदां भ्रामयित्वा जगत्यां
निष्पात्याकाशमुर्वीमुडुशशिदिनकृद्भारगुर्वीं विधास्ये ।
यद् वा मद्बाल्यलीलोत्तरलतरहलाघातनिर्भिन्नभूमी-
निर्यत्पातालगङ्गोज्ज्वलबहलजलैः प्लावयिष्यामि विश्वम् ॥२१॥

—रामचन्द्रस्यैतौ[4]

### अथ बुद्धः

२२ आयावद्बुधकुतूहले भगवति व्यालोलयत्यागमा-
नोङ्कारेण भयातुरेण चलितं विन्दुं विहाय क्वचित् ।
ओकारः करपञ्जरं पुरभिदो भेजे त्रिशूलच्छलाद्
विन्दुश्चक्रमिषेण कैटभरिपोस्तस्थौ कराम्भोरुहे ॥२२॥[5]

### अथ कल्की

२३ यवनीनयनाम्बुधोरणीभिर्धरणीनामपनीय तापवह्नीन् ।
सुकृतद्रुमसेकमाचरन्तं धृतकल्कं प्रणमामि निर्विकल्पम् ॥२३॥[6]

### अथ कृष्णः

२४ कमलाकुचकनकाचलजलधरमाभीरसुन्दरीमदनम् ।
अधिततशेषफणावलिकमलवनीभृङ्गमच्युतं वन्दे ॥२४॥[7]

---

१, २. ग-प्रतौ केनचिदियं टिप्पणी लिखिता—हला मदिरा तस्याः पानं कर्तुं, कौतूहलमतति प्राप्नोतीति सः कौतूहलवान् भवामीत्युक्त्वा हसन् । हा(ह)लाप्रयोगः साधुः । ३. क मां । ४. क °चन्द्रोपाध्यायानामेतौ । ५. क इतः परं 'भानुमिश्रस्य' इति लिखति । ६. क इतः परं 'भानुमिश्रस्य' इति लिखति । ७. क इतः परं 'कस्यापि' इति लिखति ।

## अथ[1] कृष्णस्य वाग्यम्

२५ कृत्वा सिंहकलेवरं विरचयन् खेदातुरान् कुञ्जरान्
वाराहीं तनमेत्य लोलदलकान् विद्रावयन् गोपकान् ।
धृत्वा मत्स्यवपुस्तडागकुहरे कल्लोलमान्दोलयन्
कृष्णः शैशवविग्रहं विरचयन् लेभे भ्रमन् विभ्रमान् ॥२५॥

—भानुकरस्यैते[2]

## अथेश्वरः[3]

२६ स्तब्धेऽर्धाङ्गे चरणपतनं नैव वामस्य पार्श्वे-
र्वैमत्येनाञ्जलिविरचनं नापि वाचां प्रपञ्चः ।
अंशे जिह्वाकृतजडतया मानवत्यां मृडान्यां
कोऽन्यः कल्पो ह्यनुनयविधावर्धनारीश्वरेऽभूत् ॥२६॥

—लक्ष्मणस्य

२७ मल्लीमाल्यधिया सुधाकरकलां कण्ठश्रियं कज्जल-
भ्रान्त्या भालविलोचनानलशिखां सिन्दूरपूराशया ।
कैलासे प्रतिबिम्बितात् स्ववपुषो गृह्णन् हसन्त्या मुहुः
पार्वत्याः प्रतिकर्मकर्मणि चिरं मुग्धो हरः पातु वः ॥२७॥

—गणपतेः[4]

२८ ओंकारो यस्य कन्दः सलिलमुपनिषन्न्यायजालं मृणालं
ब्रह्माण्डं यस्य काण्डं प्रसरति परितो यस्य यागः परागः ।
भृङ्गध्वानः पुराणं विजनसुरधुनीतीरवासोऽधिवासो
यस्यानन्दो मरन्दः पुरहरचरणाम्भोरुहं तद् भजामः ॥२८॥

—भानुकरस्य

## अथ शम्भोस्ताण्डवम्

२९ चञ्चत्पादहतिक्षतक्षिति चलच्चक्षुःश्रवःसंहति-
त्रस्यद्दिक्पति दिग्गजप्लुति धराधःशेषनश्यद्द्रति ।

---

१. ग-प्रतौ 'अथ' इति नास्ति । २. क °करमिश्रस्य । ३. क भवानीपतिः ।
४. क °पतिमिश्रस्य ।

दोर्दण्डाहतिसन्ततित्रुटदुरुब्रह्माण्डभाण्डस्थिति-
त्रस्तस्वर्पतिसम्भ्रमन्मति भवस्यास्तां मुदे ताण्डवम् ॥२९॥

—लक्ष्मणस्य

## अथ गणेशः

३० विघ्नेशः सर्वविघ्नान् परिहरतु स यत्कर्णतालादुदञ्चद्-
वायुव्याधूतगण्डस्थलयुगलगलद्भूरिसिन्दूरपूरैः ।
आरुण्याद्वैतभावं गतवति जगति क्वापि नो भाति भानु-
र्नैवासौ शीतभानुः क्वचिदपि नितरां भासते वा कृशानुः ॥३०॥

—लक्ष्मणस्य

३१ क्रोडं तातस्य गच्छन् विशदविसधिया शावकं शीतभानो-
राकर्षन् भालवैश्वानरनिशितशिखाशोचिषा तप्यमानः ।
गङ्गाम्भः पातुमिच्छुर्भुजगपतिफणाफूत्कृतैर्दूयमानो
मात्रा सम्बोध्य नीतो दुरितमपनयेद्[1] वालवेषो गणेशः ॥३१॥

## अथ कार्तिकेयः

३२ मूर्ध्नो मन्मथशासितुर्विगलिते क्षीराशयास्वादिते
वक्त्रे वालतुषारभासि परितः कण्ठोदरे तिष्ठति ।
शेषं वीक्ष्य विलोलशोणनयनं भिन्नाधरोष्ठश्रियं
व्यातन्वन् करतालिकां विहसितं वालो विशाखो दधौ ॥३२॥

३३ शृङ्गे शिरीषमालां कण्ठे घण्टां पदेषु मञ्जीरम् ।
विन्यस्य प्रतिभवनं भर्गवृषं भ्रामयामास ॥३३॥

—भानुमिश्रस्यैतौ[2]

## अथ भवानी

३४ स्खलितं करकङ्कणं निशायामथ शर्वेण भुजङ्गनिर्मितं तत् ।
उषसि प्रवि[3]लोक्य भीतवत्या भगवत्याः करधूननं धिनोतु ॥३४॥

---

१. ग °नुयाद् । २. ग °स्यैते । ३. ग प्रति° ।

३५ दरिद्रजनरञ्जनस्तव भवानि दृक्खञ्जनः
स चेदभिमुखो भवेत् स न भवेत् किमेवं जनः ।
पयोधरतटीभरालसनमद्वधूटीलस-
न्मणिद्युतिविदीपिताम्बरतटीमहीमण्डलः ॥३५॥

—लक्ष्मणस्यैतौ

३६ हरिपत्राम्बकां फुल्लनलास्यां कुन्तिगामिनीम् ।
केतुवाराचितां दाक्षीं घनकुचयुगं ( गां ? ) भजे [?] ॥३६॥

३७ वन्देऽहं कालिकामष्टभुजव्यूहवृतां शिवाम् ।
विध्यादिसुरसन्दोहैर्वन्दितां सुषमाम्बकाम् ॥३७॥[1]

—एतौ भोगिसूनोर्वेणीदत्तस्य

३८ यदेतल्लावण्यं भगवति भवप्रेमलहरि
त्वदीयाङ्घ्रेरस्मात् पथि सह रजोभिर्विगलति ।
विनिर्मातुं शातक्रतवपुरपङ्केरुहमुखी-
स्तदुञ्छव्यापारैरपहरति मन्ये कमलभूः ॥३८॥

—भानुकरस्य

## अथ लक्ष्मीः

३९ आख्याते हसितं पितामह इति त्रस्तं कपालीति च
व्यावृत्तं गुरुरित्ययं दहन इत्याविष्कृता भीरुता ।
पौलोमीपतिरित्यसूयितमथ व्रीडाविनम्रं श्रिया
पायाद् वः पुरुषोत्तमोऽयमिति यो न्यस्तः स पुष्पाञ्जलिः ॥३९॥

—क्षेमेन्द्रस्य

४० शिरो व्याधुन्वत्यास्तव जननि सिन्दूरकणिका
निकामं दृक्पद्मे पतति किमतः पश्यसि न माम् ।
रतारम्भे किन्तु प्रचलमणिकेयूरमुखरं
हरन् वक्षोवासः स खलु कृतकृत्यो मधुरिपुः ॥४०॥

—भानुकरस्य

---

१. ग श्लोकाविमौ ३६, ३७ संख्याकौ न स्तः ।

४१ पद्मायाः स्तनहेमसद्मनि मणिश्रेणीसमाकर्षके
किञ्चित्कञ्चुकसन्धिसन्निधिमिते शौरेः करे तस्करे ।
सद्यो जागृहि जागृहीति वलयध्वानैर्ध्रुवं जाग्रता
कामेन प्रतिबोधिताः प्रहरिका रोमाङ्कुराः पान्तु वः ॥४१॥

—कस्यापि

## अथ गङ्गा

४२ इयं चिद्रूपाऽपि प्रकटजलरूपा भगवती
यदीयाम्भोविन्दुर्वितरति च शम्भोरपि पदम् ।
पुनाना धुन्वाना निखिलमपि नानाविधमघं
जगत्कृत्स्नं पायादनुदिनमपायात्सुरधुनी ॥४२॥

—लक्ष्मणस्य

४३ जडता जडतामम्ब पङ्कः पङ्कं व्यपोहतु[1] ।
भ्रान्तिस्तव मम भ्रान्तिमधोगतिरधोगतिम् ॥४३॥

—कस्यापि

## अथ मणिकर्णी

४४ अमुक्तां भूषयन्तु स्वां तनुं संसारसिन्धुगैः ।
मणिकर्णीताम्रपर्णीमुक्तिमुक्ताफलैर्जनाः ॥४४॥

—लक्ष्मणस्य

४५ स्नातं वारिषु निर्मलेषु जटिलो जातः पुनः कुन्तलः
काये क्षालितमेव पङ्कपटलं कण्ठे पुनः कालिमा ।
उद्दामाः खलु वीचयः परिचिताः क्रान्तः करो भस्मना
मातः श्व मणिकर्णि कर्णपरुषं जल्पामि कोऽयं क्रमः ॥४५॥

४६ मूर्ध्नः शीतरुचः कलां बिसधिया व्यालोलमालोकते
कण्ठे नीलमपाकरोति सलिलैर्जम्बालजालभ्रमात् ।
भूयः प्रोञ्छति कुन्तलं स्खलदपां धाराधिया स्वर्धुनी-
मन्योन्यं मणिकर्णि कौतुकमिदं निर्मज्य निर्गच्छताम् ॥४६॥

---

१. ग °हति ।

## अथ यमुना

४७ ऊरीकर्तुं तुहिनकिरणप्रीतिधारामुदारां
दूरीकर्तुं दिनकरकरक्लेशबाधामगाधाम् ।
यस्याः पुण्ये पयसि विशति स्नातुकामा त्रियामा
प्रायस्तस्यास्तिमिरततिभिः श्यामलं नीरमस्याः ॥४७॥

—भानुकरस्यैते

इति श्रीआङ्कोलकरलक्ष्मणभट्टविरचितायां पद्यरचनायां प्रथमो व्यापारः ॥१॥

• • •

## द्वितीयो व्यापारः

४८ अथानवद्यपद्येषु प्रतिपाद्यस्य कीर्तये ।
तत्पद्यकर्तृकीर्त्यै च[1] कीर्त्यन्ते तानि कौतुकात् ॥१॥

### अथ कीर्तिः

४९ आभात्येतद् द्विचन्द्रं वियदपि निखिलं दन्तिनस्तु त्रिदन्ता
गङ्गापूरश्चतुर्धा प्रविलसति लसत्पञ्चदन्तः करीन्द्रः ।
षड्वक्त्रः पञ्चवक्त्रः परिणमति तथा षड्गुणाः सप्तसंख्याः
शङ्के त्वत्कीर्तिमूर्त्या नवमिव जगदालक्ष्यते क्षोणिपाल ॥२॥

५० दुग्धाम्भोधेः परिचुलुकनं सम्पिधानं[2] सुधाया-
स्त्रासः सुत्रामगज[3]महसामातपत्रस्य मित्रम् ।
भङ्गो गङ्गाचपलपयसां तन्द्रिका चन्द्रिकाया-
स्त्वत्कीर्तिः सा जयति जगति क्ष्मापतीनां रतीश[4] ॥३॥

५१ पाद्यं दुग्धाम्बुधिरपि सुधानर्घ्यमर्घ्यं तथैता-
स्तारा हारास्तनुमलयजं चन्दनं चन्द्रिकैव ।
इन्दोर्बिम्बं रुचिरमुकुरः स्वर्गतेति श्रुताया-
स्तत्त्वत्कीर्तेरुपहृतमिदं स्वःपथे[5] स्वर्वधूभिः ॥४॥

५२ दुग्धाम्भोधावगाधे विहरति सुधया क्षालयत्यङ्घ्रियुग्मं
कृत्स्नां ज्योत्स्नां दुकूलं कलयति मलयोद्भूतचर्चां तनोति[6] ।
स्वच्छन्दं नृत्यति द्रागुरगपतिशिरस्येव निद्राति चन्द्रे
त्वत्कीर्तिः स्वामिनीव त्रिजगति विहरत्येवमुर्वीश गुर्वी ॥५॥

---

१. ग °त्यैव । २. का-मा °धातुं । ३. ग °मजग° । ४. क जगदभ्यापतन्ती क्षितीश ।
५. का-मा °पथि । ६. क °तमङ्गीकरोति ।

५३ देव त्वद्यशसा सितांशुमहसा गीर्वाणवृन्देऽखिले
शम्भोर्भावमवापिते तु सहसा यत्कौतुकं तच्छृणु ।
साकूताः सकुतूहलाः सचकिताः सोत्कण्ठिताः साद्भुताः
साशङ्काश्च मुहुर्मुहुर्मधुरिपौ लक्ष्म्या दृशः पातिताः ॥६॥

—एते लक्ष्मणस्य[1]

५४ मन्येऽरण्ये कुलगिरिगुहागह्वरे पर्यटन्ती
विद्धा दर्भैः किमपि चरणे वासुदेवस्य कीर्तिः ।
इन्दौ कुन्दे कुमुदमुकुले चामरे चन्दने वा
दत्वा दत्वा मृदुनि पुरतः पादमेषा प्रयाति ॥७॥

—गणपतेः

५५ विद्वद्गोष्ठीगरिष्ठ प्रतिभटदमन[2] श्रीनिजाम प्रतीमः
कृत्वा त्वत्कीर्तिगाथां वहति गणविधिं पद्मयोनिः कठिन्या ।
वक्रा लेखा गुरूणाममृतकरकलाकम्बुमल्लीमरालाः
शुद्धा लेखा लघूनां[3] विसभुजगनभोनिम्नगादन्तिदन्ताः ॥८॥

—भानुकरस्य

५६ वाणीकण्ठाभरण भवतो रुद्रचन्द्र क्षितीन्दो
कुन्दस्फीते यशसि नभसो विस्वमालोकयन्त्यः ।
त्वद्वैरिण्यो विरहविकला वक्षसि न्यस्तु[4]कामा
वारं वारं नवकमलिनीपत्रबुद्ध्यामृशन्ति ॥९॥

—रामचन्द्रस्य

५७ राजेति क्षणदाकरं विजयते दानोरुलक्ष्मीरिति
स्वर्नागं[5] बहुवाहिनीपतिरिति क्षीरोदमास्कन्दति ।
दुर्गाधीश इति स्फुटं पुररिपुं विद्वेष्टि[6] भोगोद्भट-
श्रीरित्यर्दति वासुकिं स्वयशसा दिल्लीन्द्रचूडामणिः ॥१०॥

—धरणीधरस्य

---

१. क °लक्ष्मणस्ये(स्यै)ते । २. क °मदन । ३. ग रघूनां । ४. का-मा न्यस्त° । ५. क स्वर्णागं । ६. ग विद्वेषि ।

५८ प्रतिनगरमटन्ती प्रत्यगारं व्रजन्ती
प्रतिनरपतिवक्षःकण्ठपीठे लुठन्ती ।
गिरिगरिमनितम्बाच्छादने स्वावधाना
तदपि च तव कीर्तिर्निर्मलैवेति चित्रम् ॥११॥

—कस्यापि

५९ वीर[1] क्षीरसमुद्रसान्द्रलहरीलावण्यलक्ष्मीमुष-
स्त्वत्कीर्तेस्तुलनां कलङ्कमलिनो धत्तां कथं चन्द्रमाः ।
स्यादेवं त्वदरातिसौधशिखरप्रोद्भूतदूर्वाङ्कुर-
ग्रासासक्तमतिः पतेद् यदि पुनस्तस्याङ्कशायी मृगः ॥१२॥

६० भ्रान्त्वा भूवलयं दशास्यदमन त्वत्कीर्तिहंसी दिवं[2]
याता[3] ब्रह्ममरालसङ्गमवशाद् या तत्र गुर्विण्यभूत् ।
पश्य स्वर्गतरङ्गिणीपरिसरे कुन्दावदातं[4] तया
मुक्तं भाति विशालमण्डकमिदं[5] शीतद्युतेर्मण्डलम् ॥१३॥

—महानाटकात्[6]

६१ तुङ्गब्रह्माण्डसिंहासनमिदमुदयच्चित्रमध्यास्य नित्यं
न्यञ्चद्दिव्यस्रवन्तीसितचमरचयं लालयन्[7] दिग्वधूभिः ।
राकाचन्द्रातपत्रं दिनकरमुकुरं ग्राहयँल्लोकपालान्
निर्जित्यैन्द्रं करीन्द्रं तव जयति यशश्चक्रवर्ती वघेल[8] ॥१४॥

—अकबरीयकालि[9]दासस्य

६२ यस्य क्षोणिपतेर्विहायसि यशोराशौ चमत्कुर्वति
द्राक् कर्पूररजोभ्रमेण वणिजो वीथीमुपस्कुर्वते ।
चञ्चुं चञ्चलयन्ति चन्द्रकिरणभ्रान्त्या चकोराः पयो-
बुद्ध्या व्योम्नि नियोजयन्ति कलशीमानीय वाम[10]भ्रुवः ॥१५॥

—कस्यापि[11]

---

१. क ग धीर । २. क ग गता । ३. क ग व्योम । ४. ग °वतातं । ५. क नवीनमण्डलमलं ग नवीनमण्डममलं । ६. क हनूमत एतौ । ७. चालयन्निति पाठः समीचीनः । ८. क °घेलः । ९. क ग °बरीकालि° । १०. क °शोमाभीरवाम° । ११. क मैथिलस्य ।

६३ राजन्न(न्य?)चण्डरुचिमण्डलपुण्डरीका
दिग्दन्तिचक्रविचरन्नवदन्तिनक्रा ।
उद्बुद्बुदुग्धमयनीरधिबुद्बुदाली[1]
कल्लोलिनीव तव वल्गति मल्ल[2] कीर्तिः ॥१६॥

—लक्ष्मणस्य

## अथ द्विषदकीर्तिः

६४ रघुतिलकनृपाल त्वद्द्विषत्क्षोणिपाल-
प्रविलसदपकीर्तिश्यामले विश्वजाले ।
भगवति भजमाने कृष्णतां शूलपाणौ
किमुदधिगिरिपुत्र्यौ चक्रतुस्तन्न विद्मः ॥१७॥

—लक्ष्मणस्य

## अथ शौर्योदार्यप्रधाना कीर्तिः

६५ लग्नं रागावृताङ्ग्या सुदृढमिह यथैवासियष्ट्यारिकण्ठे
मातङ्गानामपीहोपरि परपुरुषैर्या च दृष्टा पतन्ती ।
तत्सक्तोऽयं न किञ्चिद् गणयति विदितं तेऽस्तु तेनास्मि[3]दत्ता
भृत्येभ्यः श्रीनियोगाद् गदितुमिति[4] गतेवाम्बुधिं यस्य कीर्तिः ॥१८॥

—कस्यापि[5]

## अथ प्रतापः

६६ अये नृपतिमण्डलीमुकुटरत्न युष्मद्भुजा-
महोष्मततिसंजुषा[6] बत भवत्प्रतापार्चिषा ।
द्विषामतिभृशं यशःप्रकटपारदो ध्मापना-
दुदस्फुटत तारकाकपटतो विहायस्तटे ॥१९॥

—लक्ष्मणस्य

६७ क्षोणी[7]पर्यटनव्रते क्षितिपते युष्मत्प्रतापो भ्रमात्
सौराष्ट्रे मगधे कलिङ्गसविधे वङ्गे यदङ्गे गतः ।

---

१. क °दालि° । २. ग 'मल्ल' इति नास्ति । ३. क ग किञ्चास्मि । ४. ग °मिव ।
५. क दाक्षिणात्यानाम् । ६. ग °संयुषा । ७. क क्षीणो ।

तत्पापं[1] परिहर्तुमम्बरमणिव्याजेन सप्तार्णवे
स्नात्वा विष्णुपदं स्पृशन्नपि भृशं भूयः परिभ्राम्यति ॥२०॥[2]

६८ अध्यायोधनवेदि[3] मार्गणकुशानास्तीर्य खड्गस्रुचा
हुत्वारेः पललं चरुं हविरसृक्तन्मस्तकस्वस्तिकैः ।
संवेष्ट्याहवनीयमालसदभिख्योऽसौ प्रतापानलोऽ-[4]
स्थापि द्रागुदकाञ्जलीकृतचतुःपाथोधिना श्रीमता ॥२१॥

—धरणीधरस्य

६९ येनोद्दग्धात्त्वदरिनिकराद्रेन्धनव्रातकात्स-
म्भूतो धूमो गगनमसिततवं निनायावलक्षम् ।
भूविम्बाहस्करनरपते हारिसिंह त्वदीयोऽ-
नन्तापीठे खलु विजयते स प्रतापः कृशानुः ॥२२॥[5]

—भोगिसूनोर्वेणीदत्तस्य

७० लङ्काधामनि वीरभानुनृपतेः प्रेक्ष्य प्रतापोदयं
प्रत्यागारमधीरनीरजदृशो भूयो हुताशभ्रमात् ।
क्षुभ्यद्द्वारिणि विधूतपाणि विगलन्मुक्तामणि प्रस्खलद्-
वाष्पश्रेणि विलोलवेणि दयितं वाष्प[6]स्थले बिभ्रति ॥२३॥

७१ क्षोणीकाम निजामशाह भवतः प्रौढैः प्रतापानलै-
र्द्रागेव द्रवरूपतामुपगते चामीकराणां चये ।
भ्रश्यद्वासवधामधोरणि मुहुर्मज्जद्ग्रहग्रामणि
त्रस्यत्कामिनि निष्पतद्वनि तलं मेरोः समुन्मीलति ॥२४॥

७२ त्वत्प्रतापानलज्वालादग्धं दुग्धोदधिं पुनः ।
नास्वादयति विस्वादमगस्त्यो विस्तृता[7]ञ्जलिः ॥२५॥

—एते भानुकरस्य[8]

७३ कूर्मः पादोऽत्र[9] यष्टिर्भुजगपतिरसौ भाजनं भूतधात्री
तैलापूराः समुद्राः कनकगिरिरयं वृत्तवर्तिप्ररोहः ।

---

१. क तस्याहं (°स्यांहः) । २. क एतदनन्तरं 'कस्यापि' इति लिखति । ३. क °देहि ।
४. क °पोऽनलो । ५. क ग पद्यमिदं नास्ति । ६. क कण्ठ° । ७. क निसृता° ।
८. क °करमिश्रस्य । ९. क ग स्थाणुः कूर्मोऽत्र ।

ज्योतिश्च[1]ण्डांशुरोचिर्गगनमलिनिमा कज्जलं दह्यमानाः
शत्रुश्रेणीपतङ्गा ज्वलति[2] रघुपते त्वत्प्रतापप्रदीपः ॥२६॥

—महानाटकात्[3]

## अथ कीर्तिप्रतापौ

७४ क्षितिप किमपि चित्रं जागरूकेऽपि युष्मद्-
यशसि शशिकदम्बे त्वत्प्रतापेऽर्कबिम्बे ।
नयनकुवलयानि त्वद्द्विषत्कामिनीना-
मपि च वदनपद्मान्याशु यत्स[4]ङ्कुचन्ति ॥२७॥

—लक्ष्मणस्य

७५ त्वत्प्रतापार्कबिम्बेनासह्ये न विकचीकृता ।
कीर्तिस्ते भाति विगतालिव्रजाङ्केव पद्मिनी ॥२८॥[5]

—भोगिसूनोर्वेणीदत्तस्य

७६ कीर्त्याऽस्य चन्द्रकरकोमलयाऽतिशुभ्रं
शोणं नवार्ककिरणप्रतिमप्र[6]तापैः ।
श्यामद्युति[7]द्विषदकीर्तिमषीभिरित्थं
चित्रं तदाम्बरमराजत दिग्वधूनाम् ॥२९॥

—अम्बष्ठस्य

## अथ दानम्

७७ देव क्षोणितलाधिपे[8] त्वयि महादानप्रदाने विधौ
चेतः कुर्वति पातयत्यपि दृशं स्वर्णादिके वस्तुनि ।
विप्राणामतिघोरधारकठिनद्योतत्कुठारोद्यता-
घातप्रस्फुटिताङ्गसन्धिचकितो मेरुः परं दूयते[9] ॥३०॥

---

१. क ग अर्चिश्च° । २. क ग जयति । ३. क ग कस्यापि । ४. क °न्यासयत्स° ।
५. क ग पद्यमिदं नास्ति । ६. क ग °तिमैः प्र० । ७. क श्यामा द्युति° ग श्यामद्विति° ।
८. क ग °धिप । ९. क ग कम्पते ।

७८ अन्यार्थसङ्गीकृतवारिपाणौ विशङ्कमानास्तव दानवारि।
परस्परं दीनमुखा न के वा देवाः सुमेरुं शुशुचुः स्वभूमिम्[1] ॥३१॥

—एतौ[2] लक्ष्मणस्य

७९ दाने द्राघीयसि कपटतः स्वस्तटिन्याः कठिन्या
रेखामेकां तव कृतवता पुष्करागारभित्तौ।
नापि प्रापि क्वचिदपि समः श्रीनिजाम द्वितीय-
स्तेनाकारि स्थगितमनसा वेधसा बिन्दुरिन्दुः ॥३२॥

८० यशःकिरणधोरणीतुलितरोहिणीवल्लभ
त्वया क्षणमुदीक्ष्यते[3] जगति यो दरिद्रो जनः।
पयोधरमहीधरे नटति तस्य वामभ्रुवां
रणत्कनककिङ्किणीकलरवेण देवस्मरः ॥३३॥

—एतौ भानुकरस्य[4]

८१ म्लायद्वक्त्ररुचः कदन्नकणिकाकुक्षिम्भरा भिक्षवो
ये केचित् क्षितिकाम रामनृपते युष्मद्दृशो गोचराः।
तत्तत्कान्तकुटुम्बिनीश्रुतिनटत्ताटङ्करत्नाङ्कुर-
ज्योत्स्नाभिर्जटिली[5]भवन्ति भुवने का वा न दिग्भित्तयः ॥३४॥

—रामचन्द्रस्य[6]

८२ अनेन सर्वार्थिकृतार्थता कृता हृतार्थिनौ कामगवीसुरद्रुमौ।
मिथः पयःसेचनपल्लवाशने प्रदाय दानव्यसनं समाप्नुतः ॥३५॥

—श्रीहर्षस्य

८३ देव त्वत्करनीरदे दिशि दिशि प्रारब्धपुण्योन्नतौ
चञ्चत्कङ्कणरत्नराजितडिति स्वर्णामृतं वर्षति।
स्फीता कीर्तितरङ्गिणी समभवत् तृप्ता गुणग्रामभूः[7]
पूर्णं चार्थिसरः शशाम विदुषां दारिद्र्यदावानलः ॥३६॥

—महानाटकात्[8]

---

१. क नीरं शुशोचुर्निजमेरुभूमिम् (?)। २. क 'एतौ' इति नास्ति। ३. ग °क्षते। ४. क °स्यैतौ। ५. क °र्धवली°। ६. क °चन्द्रोपाध्यायस्य। ७. क गुणिः ग्रामिभूः (?)। ग गुणि°। ८. क दाक्षिणात्यस्य।

८४ त्वया वीर गुणाकृष्टा[1] ऋजुदृष्ट्या विलोकिताः ।
लक्ष्यं[2] लब्ध्वैव गच्छन्ति मार्गणा इव मार्गणाः ॥३७॥

—कस्यापि

[3]अथ विदायः

८५ लक्ष्मीविभ्रमकुञ्जकल्पविटपिन् विद्वत्कृपावारिधे
दृष्टिं स्नेहनिधे निधेहि महतीं दीने दयार्द्रां पुनः ।
अस्मद्द्वारि निबद्धसिन्धुरघटाव्यालोलकर्णानिलैः
पीयन्तामरविन्दसुन्दरदृशां स्वेदाम्भसां बिन्दवः ॥३८॥

८६ क्रीडामूलं दुकूलं दलितरिपुमहीपालवृन्दं गजेन्द्रं
दत्वा तुङ्गं तुरङ्गं विरचय वसुधानाथ तावद् विदायम् ।
युष्मत्सत्कारभाजं दिशि दिशि चकितैः प्रेक्ष्य मामक्षिपातै-
र्वक्षोजाभोगभूमौ विलुठतु पुलकश्रेणिरेखेक्षणानाम् ॥३९॥

—एतौ भानुकरस्य[4]

इति श्रीआङ्कोलकरलक्ष्मणभट्टकृतायां[5] पद्यरचनायां द्वितीयो व्यापारः ।

• • •

१. ग दृष्टा । २. क लक्षं । ३. क इतः पूर्वं पद्यमिदमस्ति—
रुदन्ति मन्दा विनदन्ति दान्ताः स्वनन्ति निःस्वाः प्रहसन्ति विप्राः ।
वलन्ति विद्वज्जनसुन्दराङ्ग (ङ्ग्य) श्चामीकरत्यागविधौ त्वदीये ॥

—लक्ष्मणस्य

४. क °स्यैतौ । ५. क °भट्टकृतौ, ग °भट्टविरचितायां ।

## तृतीयो व्यापारः

### अथ राजवर्णनम्[1]

८७ राजानः शशिभास्करान्वयभुवः के के न संजज्ञिरे
भर्तारं पुनरेकमेव हि भुवस्त्वां वीर[2] मन्यामहे ।
येनाङ्गं परिमृद्य कुन्तलमथाकृष्य व्युदस्यायतं
चोलं प्राप्य च मध्यदेशमसकृत् काञ्च्यां करः प्रापितः[3] ॥१॥

—कस्यापि

८८ शत्रुनीरजदृशोऽनुयन्नमाख्यापदेन हरिसिंह नाम ते ।
मोहिता हरिहरीति चक्षते रूपशौर्यबलसंहितैर्गुणैः ॥२॥[4]

—भोगिसूनोर्वेणीदत्तस्य

८९ कृष्णं समरसतृष्णं दृष्टवतो विष्टरश्रवसः ।
राजन्यजन्ममूले भुजमूले पुलकमुकुलानि ॥३॥

९० क्षोणीकाम निजामशाह विलसत्सिन्दूरकुन्दस्रजि
स्रष्टा त्वच्चरणं विधाय[5] निदधे वैरिश्रियो मूर्द्धनि ।
सीमन्तस्य चकास्ति कापि सरणिस्तस्योद्र्ध्वरेखादयः
सिन्दूरस्य कणा जयन्ति किरणाः कुन्दानि मन्ये नखाः ॥४॥

—एतौ भानुकरस्य

### अथ सौन्दर्यप्रधाना नृपस्तुतिः

९१ गेहे गेहे सुभगसुदृशो रामभद्र क्षितीश
त्वामालिख्य स्वमपि सविधे[6] सस्पृहं भावयन्त्यः ।

---

१. क पृथ्वीपतिः । २. क ग कर्ण । ३. क ग पातितः । ४. क ग पद्यमिदं नास्ति ।
५. क विदाय । ६. ग समिधे ।

तस्मिन्नाकस्मिकमुपगते वल्लभे भीतिभाजः
पौष्पं-चापं तव करतले वेपमाना लिखन्ति ॥५॥

—कस्यापि

९२ अयं कामो निजामो वा त्वया किमवधारितम् ।
इति दृष्टिरिव प्रष्टुं श्रुतिं श्रयति सुभ्रुवाम् ॥६॥

९३ सर्वं लुण्ठितमुद्भटैस्तव भटैस्तेन द्विषत्सुभ्रुव-
स्त्राणाय त्वयि योजिताञ्जलिपुटं काकूक्तिमातन्वते ।
त्राणं दूरत एव तिष्ठतु मनस्तासां त्वया लुण्ठितं
तद् गम्भीर वदामि कुप्यसि न चेत् साधोरयं कः क्रमः ॥७॥

९४ अलसं वपुषि श्लथं दुकूले चपलं चेतसि धूसरं कपोले ।
चकितं नयने स्तने विलोलं तव नामश्रवणं तनूदरीणाम् ॥८॥

—एते भानुकरस्य

## अथ धरित्रीपतियात्रा

९५ चोली चोलीं न तु कलयते गुर्जरी जर्जराङ्गी
भूर्जाक्रान्ता[1] विशति विपिनं मालवी सालवीथीम्[2] ।
नो सङ्गीतं रचयति मनागङ्ग वङ्गी कृशाङ्गी
नाङ्गी रागं रहसि तनुते भूपते त्वत्प्रयाणे ॥९॥

—लक्ष्मणस्य

९६ जाने युष्मत्प्रयाणे क्षितितिलक रजोयोगदोषादशेषा
दिग्योषाः स्नान्ति सद्यस्त्वदरिनृपवधूनेत्रनीरापगासु ।
सङ्गस्य त्वत्प्रतापैस्तदनु किमुदधौ दोहदं देव तासां
प्राची प्रातः प्रसूते यदियमुरुमहोऽखण्ड[3]मार्तण्डबिम्बम् ॥१०॥

—रामचन्द्रस्य[4]

९७ देव त्वद्विजये तुरङ्गमखुरव्रातक्षतक्ष्मातलात्[5]
प्रोड्डीने रजसः परागपटले दिक्चक्रमाक्रामति ।

---

१. क ग °क्रान्तं । २. क ग °वीथ्याम् । ३. क ग °महःखण्ड° । ४. क °चन्द्रोपाध्यायानाम् । ५. क तलं, ग तले ।

अक्ष्णां पंक्तिशतानि निन्दति निजं हस्तद्वयं निन्दति
स्वां निन्दत्यनिमेषतां परिपतद्बाष्पाम्बुधारो हरिः ॥११॥

—महानाटकात्[1]

९८ त्वद्याने वाजिराजिप्रखरखुरपुटोद्धूतधूलीतमिस्रे
लुण्टाकेभ्यो भियेव स्फुटमुप[2]नयते गोसहस्रं विवस्वान् ।
गोपायन्ति द्रुतं[3] स्वं वलयमपि दिशो न क्षमाऽपि क्षमाऽभूत्
स्थातुं वा गन्तुमुर्वीतिलक वसुमती केवलं कम्पते स्म ॥१२॥

—महाकाव्ये[4]

९९ काञ्ची काञ्चीं न धत्ते कलयति न दृशा केरली केलितल्पं
सिन्दूरं दूर एव क्षिपति करतलन्यस्तमान्ध्री पुरन्ध्री ।
सौराष्ट्री मार्ष्टि भूयः सपदि नयनयो रक्तयो रक्तिमानं
कार्णाटी कर्णिकायां मलिनयति मनो मानसिंहप्रयाणे ॥१३॥

—कस्यापि

१०० वाहव्यूहखुरक्षतां वसुमतीं संवीक्ष्य[5] मूर्च्छावतीं
भेरीभाङ्कृतिचञ्चलेन पयसा वारांनिधिः सिञ्चति ।
दिग्बाला तनुते निजामनृपतेर्वातं[6] पताकांशुकै-[7]
र्धूलीधोरणिरश्विनीसुतमिव प्रष्टुं दिवं धावति ॥१४॥

१०१ वेल्लत्पक्षतिराजहंसयुवतित्रुट्यन्मृणालावलि-[8]
भ्राम्यत्षट्पदभूरिभाङ्कृति पतच्चक्रीकृतक्रेङ्कृति ।
पर्यस्यन्नवपङ्कसंहति पृथग्दिग्वर्तिवेगस्थिति
प्रस्थानध्वजवातलोलमजनि स्वर्गापगायाः पयः ॥१५॥

१०२ भेरीभाङ्कृतिभिस्तुरङ्गनिनदैः कुम्भीन्द्रकोलाहलैः
प्रस्थाने तव वीरभान दलितं ब्रह्माण्डभाण्डोदरम्[9] ।
आधाय ज्वलति प्रतापदहने रङ्कैः पुनर्वेधसा
तारानायकतारकासुरसरिद्व्याजादिवायोजितम् ॥१६॥

—भानुकरस्यैते[10]

---

१. क दाक्षिणात्यानाम् । २. क ग °मप° । ३. ग स्फुटं । ४. क ग °कवेः । ५. ग °तीमालोक्य । ६. क ग °ते वातं । ७. क °शुलैर् । ८. क ग °णालीतति° । ९. का·मा °दरी । १०. क एते भानुकरमिश्रस्य ।

## अथ पताका

१०३ नृपतिनिजामचमूचरचरणार्पणबहलपीडाभिः ।
रचयति बहिरिव रसनामरुणध्वजकैतवादवनिः ॥१७॥

१०४ निजामवसुधाधिपे क्षिपति शोणकोणे दृशौ
रणाङ्गणसमुद्भटैः प्रतिभटैर्विभिन्नीकृतम् ।
वपुर्विपुलवेपथु व्यथितमब्जिनीप्रेयसो
व्रणज्वरविशङ्कया किमु पताकया स्पृश्यते ॥१८॥

—एतौ भानुकरस्य

## अथ तुरङ्गः

१०५ वातं स्थावरयन्नभः पुटकयन् स्रोतस्विनीं[1] सूत्रयन्
सिन्धुं पल्वलयन् वनं विटपयन् भूमण्डलं लोष्टयन् ।
शैलं सर्षपयन् दिशं व्यणुकयन् लोकत्रयं क्रोडयन्
हेलारव्धरयो हयस्तव कथङ्कारं गिरां गोचरः ॥१९॥

१०६ मेखलीयति मेदिन्याः ककुभः कङ्कणीयति ।
मण्डलीस्तु[2]रगः कुर्वञ्जगतः कुण्डलीयति ॥२०॥

—भानुकरस्यैते[3]

१०७ धूलीभिर्दिवमन्धयन् बधिरयन्नाशाः खुराणां रवै-
र्वातं संयति खञ्जयञ्जवजयैः स्तोतॄन् गुणैर्मूकयन् ।
धर्माराधनसन्नियुक्तजगता राज्ञाऽमुनाऽधिष्ठितः
सान्द्रोत्फालमिषाद् विगायति पदा स्प्रष्टुं तुरङ्गोऽपि गाम् ॥२१॥

—श्रीहर्षस्य

१०८ अलक्षितगतागतैः कुलवधूकटाक्षैरिव
क्षणानुनयशीतलैः प्रणयकेलिकोपैरिव ।
सुवृत्तमसृणोन्नतैर्मृगदृशामुरोजैरिव
त्वदीयतुरगैरिदं धरणिचक्रमाक्रम्यते ॥२२॥

—कस्यापि[4]

---

१. °स्वतीं । २. क ग °ण्डलीं तु° । ३. क °करस्य । ४. एतदनन्तरं क-प्रतौ चापल्यमित्यादि पद्यं, ग-प्रतौ तु त्रयोविंशपद्यानन्तरमस्ति । सम्पूर्णं पद्यमेवम्—

१०९ निर्मांसं मुखमण्डले परिमितं मध्ये लघुं कर्णयोः
स्कन्धे वन्धुरमप्रमाणमुरसि स्निग्धं च रोमोद्गमे ।
पीनं पश्चिमपार्श्वयोः पृथुतरं पृष्ठे प्रधानं जवे
राजा वाजिनमारुरोह सकलैर्युक्तं प्रशस्तैर्गुणैः ॥२३॥[1]

—त्रिविक्रमस्य

अथ कृपाणः

११० भूभृन्मौलितटीषु दर्शितसमारम्भोऽयमम्भोधर-
स्त्वत्खड्गः प्रतिपक्षपङ्कपटलं प्रक्षालयन् धारया ।
व्युद्ध[2]क्रुद्धविरुद्धसिन्धुरवलद्गण्डस्थलप्रस्खल-
न्मुक्ताभिः करकाभिराशु समरक्षोणीतले वर्षति ॥२४॥

—गणपते.[3]

१११ वीर त्वत्खड्गधारानिहतरिपुगणास्तं हिमांशुं विभिद्य
स्वर्गे यान्ति स्म नूनं विगलितकलुषाः साधुवत्पुण्यलभ्ये ।
यस्मिन् संलक्ष्यते वै विकटमलपदे नावभेदोऽधुनाऽपि
मध्याभ्यालक्ष्य देव स्रुति[?]ततविषयो देव भूविम्वभानो[?] ॥२५॥[4]

—भोगिसूनोर्वेणीदत्तस्य

११२ क्षोणीकाम निजाम तावकभुजं लब्ध्वा भुजङ्गेश्वरं
जानीमः करवालकालभुजगी किं नाम गर्भिण्यभूत् ।
यद्भिन्नेभकपोललोलविगलन्मुक्ताकलापच्छला-
दच्छामण्डपरम्परामधिरणं[5] सूते स्फुरन्ती मुहुः ॥२६॥

—भानुकरस्य[6]

---

चापल्यं नवनागरीनयनयोरभ्यस्य भूमीतला-
दाकांक्षन्निव जेतुमम्बरमणेर्वाहं कृताहङ्कृति ।
प्रागाकुञ्चितवल्गमञ्चितगति प्रोदञ्चदुच्चैःस्थिति
न्यञ्चत्कन्धरमुन्नतप्लुति नभोऽप्याक्रम्य विक्रीडति ॥

—पुरुषोत्तमस्य

१. क-प्रतौ त्रयोविंशसंख्यककं निर्मांसमित्यादि पद्यं नास्ति । २. ग युद्धं । ३. क °पति-मिश्रस्य । ४. क ग पद्यमिदं नास्ति । ५. क °राधिमरणं । ६. क °करमिश्रस्य ।

११३ हस्ताम्भोजालिमाला नखशशिरुचिरश्यामलच्छायवीची
तेजोऽग्नेर्धूमधारा वितरणकरिणो गण्डदानप्रणाली ।
वीरश्रीवेणिदण्डो लवणिमसरसीवाल[1]शैवालवल्ली
वेल्लत्यम्भोधरश्रीरकबरधरणीपालपाणौ कृपाणः[2] ॥२७॥

—अकबरीयका[3]लिदासस्य

## अथ वीरवाक्यम्

११४ अद्यारभ्य कठोरकार्मुकलताविन्यस्तहस्ताम्बुज-
स्तावन्न प्रकटीकरोमि नयने शौरे निमेषोदयान् ।
यावत्सायककोटिपाटितरिपुक्ष्मापालमौलिस्खल-
न्मल्लीमाल्यपतत्परागपटलैरामोदिनी मेदिनी ॥२८॥

११५ नो तावत्कलयामि केलिकृपणे वामभ्रुवो लोचने
तावन्न प्रणयावलीढमनसः पश्यामि मातुर्मुखम् ।
यावत्तारकुठारपातनिपतत्प्रत्यर्थिपृथ्वीपति-
भ्राम्यत्स्वर्णकिरीटबद्धशिरसो भ्राम्यन्ति नो फेरवः ॥२९॥

११६ राकातारापतिरुचिचमत्कारवाचालकीर्ति-
र्वेलाहेलापरिणतगजस्पर्धिदोर्वल्लिवीर्यः ।
एकच्छत्रं भुवनवलयं मेदिनीमेकवीरां
युद्धारम्भे स्मितपरिचितः कौतुकादद्य कुर्याम् ॥३०॥

११७ समरविहरदस्मद्भल्लनिष्णात[4]भिन्न-
प्रतिनरपतिभिन्नाद् भास्वतो बिम्बमध्यात् ।
वयमहह धरायां पातयामः पताका-
वसनपवनलोलं वारि दिव्यापगायाः ॥३१॥

११८ निष्पीते[5] कलशोद्भवेन जलधौ गौरीपतेर्गङ्गया
होतुं हन्त ललाटदावदहने[6] यावत् कृतः प्रक्रमः ।

---

१. क °वारि° । २. क ग कृपाणी । ३. क अकब्बरीका° ग अकबरीका° । ४. क °निःपात° । ५. क निःपीते । ६. क ग वपुर्ललाटदहने ।

तावत्तत्र मया विपक्षनगरीनारीदृगम्भोरुह-
द्वन्द्वप्रस्खलदस्रवारिपटलैः क्षुब्धाः पयोराशयः ॥३२॥

—भानुकरस्य[1]

अथ रणः[2]

११९ कृपाणकिरणानलं रुधिरनीरपूरच्छटा-
जटालतलसङ्कुलं भटतिमिङ्गिलै[3]राकुलम् ।
प्रमथ्य समरार्णवं वरमकर्षि लक्ष्मीस्त्वया
विधाय मद[4]मन्थरं मथनमन्दरं सिन्धुरम् ॥३३॥

—लक्ष्मणस्य

१२० [5]भल्लैर्भिन्नाः प्रतिनृपतयः शङ्खनादानुदारा-
नश्रुत्वा राजन् पुनरपि भुजादण्डकण्डूतिभाजः ।
आलिङ्गन्त्यास्त्रिदशसुदृशो भ्रूलतां वीक्ष्य भुग्नां
चापभ्रान्त्वा चपलमनसो हस्तमावर्तयन्ति ॥३४॥

१२१ मिलितमिहिरभासं मौलिमेतस्य दृष्ट्वा
परवरतनुपादालक्तकं तर्कयन्त्या ।
त्वदरिधरणिजानिर्भानुबिम्बेन गच्छन्
सुरनगरमृगाक्ष्या वीक्ष्यते साभ्यसूयम् ॥३५॥

—भानुकरस्यैतौ[6]

१२२ कोदण्डस्तव हस्तगो हृदि वलत्यर्तिस्तु विद्वेषिणां
त्वं दाता रभसेन मार्गणगणस्तानेव संसेवते ।
वीर त्वं तु जयस्यमित्रमनिशं ते यान्ति वैकुण्ठतां
सङ्ग्रामे तव भूपते महदिदं चित्रं समालक्ष्यते ॥३६॥

—धरणीधरस्य

---

१. क एते भानुकरमिश्रस्य । २. क 'अथ रणः' इति नास्ति । ३. क भवतिमङ्गलं° । ४. का-मा विधारमद° । ५. क-प्रतौ 'भल्लैर्भिन्नाः' इत्यादिपद्यं 'मिलितमिहिर°' इत्यादिपद्यानन्तरं वर्तते । ६. क एतौ भानुकरस्य ।

१२३ को दण्डं न ददाति देव भवते कोदण्डमातन्वते
को नारातिरुपैति पारमुदधेः कोणारुणे लोचने ।
का कुञ्जान्तरमेत्य वैरितरुणी काकुं न वा भाषते
राजन् गर्जति वारणे तव पुनः को वा रणे वर्तते[1] ॥३७॥

—कस्यापि[2]

१२४ सम्मूर्च्छितं संयुगसम्प्रहारैः पश्यन्ति सुप्तप्रतिबुद्धकल्पम्[3] ।
आत्मानमङ्केषु[4] सुराङ्गनानां मन्दाकिनीमारुतवीजिताङ्गम् ॥३८॥

—वराहमिहिरस्य

१२५ करवारिरुहेण सन्धुनाने तरवारिं नृपतौ मुकुन्ददेवे ।
रचयन्त्यमरावतीतरुण्यः प्रथमं काञ्चनपारिजातमालाः ॥३९॥

—गौडस्य

१२६ परस्परेण क्षतयोः प्रहर्त्रोरुत्क्रान्तवाय्वोः समकालमेव ।
अमर्त्यभावेऽपि कयोश्चिदासीदेकाप्सरःप्रार्थितयोर्विवादः ॥४०॥

—कालिदासस्य

१२७ ते क्षत्रियाः कुण्डलिनो युवानः परस्परं सायकविक्षताङ्गाः ।
कुम्भेषु लग्नाः सुषुपुर्गजानां कुचेषु लग्ना इव कामिनीनाम् ॥४१॥

—व्यासस्य[5]

## अथ रणभग्नेऽपदशा[6]

१२८ क्षत्रियस्योरसि क्षत्रं पृष्ठे ब्रह्म व्यवस्थितम् ।
तेन पृष्ठं न दातव्यं पृष्ठदो ब्रह्महा भवेत् ॥४२॥

—श्रीव्यासस्य[7]

१२९ यदि समरमपास्य नास्ति मृत्यो-
र्भयमिति युक्तमितोऽन्यतः प्रयातुम् ।
अथ मरणमवश्यमेव जन्तोः
किमिति मुधा मलिनं यशः क्रियेत ॥४३॥

—वेणीसंहारे[8]

---

१. क ग वर्तताम् । २. क 'कस्यापि' इति नास्ति । ३. क °तुल्यम् । ४. क °भेकेषु । ५. क भगवतो व्यासस्य । ६. क ग °भग्नोपदेशः । ७. क भगवतो व्यासस्य । ८. क नारायणभट्टस्य ।

**अथ रणक्षितिः**

१३० भवत्तुरगनिष्ठुरक्षुरदृढव्रणैराचिता
क्षणात् समरविच्युतप्रतिनृपालचेलाञ्चिता ।
इयं रणधरा भवद्द्विरददानधाराजलैः
किमु व्रणतलेऽर्पितं वसनपट्टमासिञ्चति ॥४४॥

१३१ युष्मद्दोर्दण्डमण्डल्यवनमितरणच्चण्डकोदण्डदण्डो-
न्मुक्तेषुच्छिन्नमूर्च्छत्प्रतिनृपतिभुजाखण्डमुण्डावकीर्णा ।
गायन्नृत्यत्प्रवेल्लद्र[1]जनिचरवधूदत्ततालैः करालै-
र्वैतालैरट्टहासप्रकटितदशनैर्युद्धभूर्भाति भीमा ॥४५॥

—एतौ लक्ष्मणस्य

१३२ रक्तं नक्तञ्चरौघः पिबति वमति च ग्रस्तकुन्तः शकुन्तः
क्रव्यं नव्यं गृहीत्वा प्रणदति मुदितो मत्तवेतालबालः ।
क्रीडत्यव्रीडमस्मिन् रुधिरमधुवशात् पूतना नूतनाङ्गी
योगिन्यो मांसमेदःप्रमुदितमनसः शूरशक्तिं स्तुवन्ति ॥४६॥

—कस्यापि[2]

१३३ अन्योन्यास्फालभिन्नद्विपरुधिरवसामांसमस्तिष्कपङ्के
मग्नानां स्यन्दनानामुपरि कृतपदन्यासविक्रान्तपत्तौ ।
स्फीतासृक्पानगोष्ठीरसदशिवशिवातूर्यनृत्यत्कबन्धे
सङ्ग्रामैकार्णवान्तःपयसिविचरितुं पण्डिताः पाण्डुपुत्राः ॥४७॥

—वेणीसंहारे[3]

१३४ स्पृष्टा[4]कृष्टासिपिष्टोत्कटकरटिघटाकुम्भकूटांवटान्त-
र्निष्ठ्यूता[5]सृक्तटिन्यास्तटनिकटरणत्कौ[6]णपाट्टाट्टहासाः ।
श्रीभोज त्वद्रणक्ष्माक्षतभटविकटोरःस्थलत्रोटकुप्यद्-
गृध्रौघत्रोटिकोटिप्रकटचटचटाशब्दरौद्रोऽभवद् द्राक् ॥४८॥

—देवे[7]श्वरस्य

---

१. क ग °त्प्रवलगद्र° । २. क कवीश्वरस्य । ३. क नारायणभट्टस्य । ४. ग स्पष्टा° ।
५. क निर्धूता° । ६. क ग °रटत्कौ° । ७. क दिवे° ।

## अथारिपलायनम्

१३५ तादृग्दण्डविवर्त[1]नर्तितमहीचक्रादपक्रामिताः
क्वापि क्वापि च कण्टकैरुपगता रेखोपरेखाक्रमम्[2]।
यस्य प्रौढतरप्रतापदहनज्वालाभिरन्ते दिशा-
मापाके निपतन्ति पार्थिवभटाः[3] शीर्यन्ति जीर्यन्ति च ॥४९॥[4]

१३६ त्वदरिनृपतिमाशावाससं धूलिधारा-
धवलमहह भिक्षुं वीक्ष्य भर्गभ्रमेण।
सुरभिरुदधिवेलाकाननं गाहमानो
दिशति कुसुमबाणं दूरतो निर्गमाय ॥५०॥

—भानुकरस्यैतौ

१३७ नालिङ्गन्ति पयोधरौ भवदिभप्रोत्तुङ्गकुम्भस्थल-
भ्रान्त्या वेणिलतासु नैव दधति प्रीतिं तवासिभ्रमात्।
भ्रूभङ्गान् भवदीयदुर्धरधनुर्भ्रान्त्या भजन्ते न ते
वैरिक्षोणिभुजो निजाम्बुजदृशां भूमण्डलाखण्डल[5] ॥५१॥

—कस्यापि

१३८ क्षणं कान्ताराग[6]प्रसरविलसन्मानसरुचिः[7]
क्षणं शैलो[8]त्सङ्गे द्विजकुलरवाकृष्टहृदयः।
क्षणं पत्रध्वानश्रुतिपुलकितो यद्भयभरा-
द्वसन् प्राप्तोऽरण्ये रिपुरवनिपालस्थितिमिव[9] ॥५२॥

—वैद्यभानोः

१३९ राजन् द्विषस्ते भयविद्रुतस्य भालस्थलं कण्टकिनो वनान्ताः।
अद्यापि किं वाऽनुभविष्यतीति व्यपाटयन् द्रष्टुमिवाक्षराणि ॥५३॥

—कस्यापि

१४० द्वारं खड्गिभिरावृतं बहिरपि प्रक्लिन्नगण्डैर्गजै-
रन्तः कञ्चुकिभिः स्फुरन्मणिशिखैरध्यासिता भूभयः।

---

१. क °विवर्ति°। २. क °रेखभ्रमम्। ३. °घटा। ४. क एतदनन्तरं 'कस्यापि' इति लिखितम्। ५. क °ण्डलः। ६. का-मा 'कान्तागार' इत्यपरः पाठः। ७. का-मा °रतिः इति पाठान्तरम्। ८. क ग शालो°। ९. क °रवनवालस्थितमिव।

आक्रान्तं महिषीभिरेव शयनं त्वद्विद्विषां मन्दिरे
राजन् कर्ण चिरन्तनप्रणयिनी शून्येऽपि सैव स्थितिः ॥५४॥

—कस्यापि

अथारिनारी[1]

१४१ समस्तावनीनाथमौले भवन्तः परास्तद्विषः पद्मविस्तारिनेत्रा।
नितान्तं विहस्ता स्वहस्तारविन्दैर्विधत्ते पुरस्तादुरस्ताडनानि ॥५५॥

१४२ स्फुटतरमटवीनां[2] प्रान्तरे पर्यटन्ती
हरिहतगजकुम्भोन्मुक्तमुक्ताफलानि।
परिकलयति हस्ताम्भोजशोणप्रभाभिः
परिहरति च दूरान्मञ्जुगुञ्जाभ्रमेण ॥५६॥

१४३ क्षोणीपाल त्वदरिहरिणीलोचना शोच[3]माना
गुञ्जाहारं कुचकलशयोर्निःश्वसन्ती करोति।
क्षुब्धक्षीराम्बुधिलहरिसंशोभियुष्मद्यशोभि-[4]
र्गौरं मुक्ताफलमयमिवाविन्दते नन्दते च ॥५७॥

—लक्ष्मणस्यैते

१४४ धीरसिंहारिनारीणामञ्जनाक्ताश्रुविन्दवः।
उरोजे पतिता रेजुः सरोजे मधुपा इव ॥५८॥

—कस्यापि

१४५ मुखे हारावाप्तिर्नयनयुगले कङ्कणभरो
नितम्बे पत्राली सतिलकमभूत् पाणियुगलम्।
अरण्ये श्रीकर्ण त्वदरियुवतीनां विधिवशा-
दपूर्वोऽयं भूषाविधिरहह जातः किमधुना ॥५९॥

—कस्यापि

१४६ कुरुबक कुचा[5]घातक्रीडासुखेन वियुज्यसे
बकुलविटपिन् स्मर्तव्यं ते मुखासवसेचनम्।

१. क °नगरी। २. क °पदवीनां। ३. क लोच°। ४. *का-मा* (टि०) संक्षोभिस्त्व-द्यशोभिरिति पाठान्तरम्। ५. क करा°।

चरणघटनाबन्धो यास्यस्यशोक सशोकता-
मिति निजपुरत्यागे यस्य द्विषां जगदुः स्त्रियः ॥६०॥

—रत्नाकरस्य

१४७ घ्रातं तालफलाशया स्तनतटं बिम्बभ्रमेणाधरो
दष्टः पाकविदीर्णदाडिमधियालीढाः स्फुरन्तो रदाः ।
भ्राम्यन्ती भ्रमनिःस्पृहानुविपिनं त्वद्वैरिसीमन्तिनी
निद्राणा मुहुराहता मुहुरपि क्षिप्ता च शाखामृगैः ॥६१॥

—कस्यापि[1]

१४८ इतस्त्रसद्विद्रुतभूभृदुज्झिता प्रियाऽथ दृष्टा वनमानवीजनैः ।
शशंस पृष्टाऽद्भुतमात्मदेशजं शशित्विषः[2] शीतलशीलतां किल ॥६२॥

—श्रीहर्षस्य

१४९ प्रस्थानं रतिमन्दिरात् कमलिनीबन्धोरपि प्रेक्षणं
काकुः केलिविधिं विनापि चरणन्यासः पृथिव्यामपि ।
किञ्च क्लान्तमताल[3]वृन्तपवनः प्रत्यङ्गमालिङ्गति
द्रष्टव्यं किमतोऽपि कृष्णनृपतेः[4] प्रत्यर्थिवामभ्रुवाम् ॥६३॥

१५० स्वप्नेन क्षितिपावतंस भवतो भीत्या व्रजन्ती वनं
निर्मग्ना प्रतिपक्षराजरमणी कल्लोलिनीपाथसि ।
उत्क्षिप्ताननमुन्नतभ्रु चरणव्यासक्तमुक्तालतं
भूयः स्फारितबाहुवल्लि शयनादुद्भ्रान्तमुत्तिष्ठति ॥६४॥

१५१ मौलिं मानविधिं विना नमयितुं हारं स्वयं गुम्फितुं[5]
निर्यातुं दयितस्य पाणिकमलच्छायां विना वर्त्मनि ।
निद्रातुञ्च विनाङ्कपालिशयनं द्रष्टुञ्च शून्या दिशः
सख्या त्वत्प्रतिवीरनीरजमुखी साकूतमध्याप्यते ॥६५॥

१५२ अये मातस्तातः क्व गत इति यद्वैरिशिशुना
दरीगेहे लीना निभृतमिह पृष्टा स्वजननी ।

---

१. क 'कस्यापि' इति नास्ति । २. का-मा (टि०) 'शीतद्विषः' इति पाठान्तरम् ।
३. ग °तमाल° । ४. क ग °पते । ५. °म्फितं ।

करेणास्यं तस्य द्रुतमथ निरुध्याश्रुभृतया
विनिःश्वस्य स्फारं शिव शिव दशैवोत्तरयति ॥६६॥

—भानुकरस्यैते[1]

## अथारिदम्पती

१५३ अपर्णेयं भूभृद्वनमटति वल्काम्बरधरा[2]
जटालो दिग्वासाः शिखरिणि शिवोऽयं निवसति ।
इति भ्रान्त्याऽन्योन्यं क्षणमिलितयोः क्षोणितिलक
द्विषद्दम्पत्योस्ते शिव शिव भवन्ति प्रणतयः ॥६७॥

—कस्यापि

## अथारिनगरम्

१५४ अलसभुजलताभिर्नाद्दृतो नागरीभि-
र्भवनदमनकानां नातिथिर्वा बभूव ।
त्वदरिनगरमध्ये सञ्चरंश्चैत्रजन्मा
जरदजगरपीतः क्षीयते गन्धवाहः ॥६८॥

१५५ त्वदरिनृपतिकेलीसौधसंरूढदूर्वा-
ङ्कुरकवलनलोलं वीक्ष्य रङ्कुं सुधांशोः ।
उपवनहरिणीनामुन्नतभ्रूलतानां
प्रसरति रतिजानिग्लानिजन्मा विवर्तः ॥६९॥

१५६ त्वद्वैरिभवनलिखितां सीतामाहर्तुमुद्धृत्य ।
कौणपकपिमण्डलयोः शिव शिव भूयो भवन्ति संरम्भाः ॥७०॥

—भानुकरस्यैते[3]

१५७ अधाक्षीन्नो लङ्कामयमयमुदन्वन्तमतरद्
विशल्यं सौमित्रेरयमुपनिनायौषधिनम् ।
इति स्मारं स्मारं त्वदरिनगरीभित्तिलिखितं
हनूमन्तं दन्तैर्दशति कुपितो राक्षसगणः ॥७१॥

—कस्यापि

१. क एते भानुकरमिश्राणाम् । २. ग °धरो । ३. क °मिश्रस्यैते ।

१५८ त्वद्वैरिणो दूरपलायितस्य प्रकाशयन्नक्तमरण्यमार्गम् ।
कृशानुरासीदभिनन्दनीयस्तुङ्गेषु लग्नो निजमन्दिरेषु ॥७२॥

—कस्यापि

१५९ स्नाताः प्रावृषि वारिवाहसलिलैः संरूढदूर्वाङ्कुर-
व्याजेनात्तकुशाः प्रणालसलिलैर्दत्वा निवापाञ्जलीन् ।
प्रासादास्तव विद्विषां परिपतत्कुण्डयस्थिपिण्डच्छलात्
कुर्वन्ति प्रतिवासरं निजपतिप्रेतेषु पिण्डक्रियाम् ॥७३॥

—हनूमतः

१६० हस्ती वन्यः स्फटिकघटिते भित्तिभागे स्वबिम्बं
दृष्ट्वा दृष्ट्वा प्रतिगज इव त्वद्द्विषां मन्दिरेषु ।
दन्ताघाताद्दलितदशनस्तं पुनर्वीक्ष्य सद्यो
मन्दं मन्दं स्पृशति करिणीशङ्कया विक्रमार्क ॥७४॥

—कस्यापि

इति श्रीआङ्कोलकरलक्ष्मणभट्टविरचितायां[1] पद्यरचनायां तृतीयो व्यापारः ।

• • •

१. क °भट्टकृतौ ।

## चतुर्थो व्यापारः

### अथ शृङ्गारः

१६१ अथ शृङ्गारभृङ्गारसम्भृताः पद्यरूपिणीः ।
व्यक्तीकुर्वे सुधाः सर्वे बुधाः संशीलयन्तु ताः[1] ॥१॥

### अथ कामप्रभावः

१६२ प्रतप्तायःपिण्डाविव किमपि सन्ताप्य विशिखै-
र्यथा कल्पान्तेऽपि प्रविघटत एतौ नहि[2] पुनः ।
तथा तौ देहौ यः सपदि शिवयोः संघटितवा-
नमुष्मै कामाय प्रतिनमत वामाय विबुधाः ॥२॥

—लक्ष्मणस्य[3]

### अथ बा[4]लावर्णनम्[5]

१६३ किं कौमुदीः श[6]शिकलाः सकला विचूर्ण्य
संयोज्य चामृतरसेन पुनः प्रयत्नात् ।
कामस्य घोरहरहुङ्कृतिदग्धमूर्तेः
सञ्जीवनौषधिरियं विहिता विधात्रा ॥३॥

१६४ एकान्तसुन्दरविधानजडः क्व धाता
सर्वाङ्गकान्ति मधुरं क्व च रूपमस्याः ।
मन्ये महे[7]श्वरभयान्मकरध्वजेन
प्राणार्थिना युवतिरूपमिदं गृहीतम् ॥४॥

—कस्याप्येतौ[8]

---

१. क बुधास्ताः शीलयन्तु च । २. क ग न तु । ३. क °स्यैतौ । ४. क तत्रादौ बा° । ५. ग लावण्यम् । ६. क °दीश° । ७. क मन्यामहे° । ८. क कयोरप्येतौ ।

१६५ अदम्भा हि रम्भा विलक्षा च लक्ष्मीर्घृताची ह्रिया चीरसंछादितास्या ।
अहो जायते मन्दवर्णाऽप्यपर्णा समाकर्ण्य तस्या गुणस्यैकदेशम् ॥५॥

—गदाधरस्य

## अथ वयःसन्धिः

१६६ स्मेरायमानवदनस्मितलेशमीष-
न्मन्दायमानगतिरीतिपदारविन्दम् ।
अभ्यस्यमाननवविभ्रमशोभमेत-
दाहूयमानयुवमानसमङ्गमस्याः ॥६॥

१६७ समुन्नमदुरःस्थलप्रसरमीषदालक्षित-
क्षणक्षणविलक्षणप्रचलदीक्षणावेक्षणम्[1] ।
समुल्लसितवि[2]भ्रमादरदरभ्रमद्भ्रूलतं
किमाचरितुमीहते वरतनोर्न जाने वयः ॥७॥

—लक्ष्मणस्यैतौ

१६८ तव कुवलयाक्षि वक्षसि कुण्डलिता कापि काञ्चनी कान्तिः ।
कुसुमेषोर्विजिगीषोर्भवति भुजे भूयसी कण्डूः ॥८॥

१६९ रेखा काचन कज्जलस्य नयनाम्भोजे मिथः कौशला-
दालीभिः सरलीकृताऽपि कुटिलीभावं समालम्बते ।
लक्ष्या[3] वक्षसि पाणिपद्मविषमस्पर्शोदयादुन्नति-
र्जानीमो वयमेणशावनयने बाल्यं न पाल्यं तव ॥९॥

—भानुकरस्यैतौ

१७० न शीलं दृग्भङ्गी कलयति कुरङ्गीनयनयोः
कुचश्रीः कर्कन्धूफलमपि न बन्धूकृतवती ।
सुधायाः सध्रीची न च वचनवीची परिचिता
तथापि श्रीरस्या युवजननमस्या विजयते ॥१०॥[4]

---

१ क °वीक्षणा । २. क समभ्यसति वि° । ३. ग 'लक्ष्या' इति विलिख्य 'लक्ष्म्या' इति संशोधितम् ।
४. क-प्रतौ सम्पूर्णं पद्यमिदमेवं लिखितम्—

१७१ न दन्तुरमुरःस्थलं वचसि नाश्रिता चातुरी
विकारि न विलोकितं[1] भ्रुवि न वक्रिमोपक्रमः ।
तथापि हरिणीदृशो वपुषि कापि कान्तिच्छटा
पटावृतमहामणिद्युतिरिवात्र संलक्ष्यते[2] ॥११॥

—जयदेवस्य

१७२ अचलं चलदिव चक्षुः प्रकृतमपीदं समुद्यदिव वक्षः ।
अतदिव तदपि शरीरं सम्प्रति वामभ्रुवो जयति ॥१२॥

—कस्यापि

## अथ तारुण्यम्

१७३ उदयति तरुणिमतरणौ शैशवशशिनि प्रशान्तिमायाते ।
कुचचक्रवालयुगलं तरुणितटिन्यां मिथो मिलति ॥१३॥

—कस्यचित्

१७४ परिहरति वयो यथा यथाऽस्याः स्फुरदुरुकन्दुकशालि बालभावम् ।
द्रढयति धनुषस्तथा तथा ज्यां स्पृशति शरानपि सज्जयन् मनोभूः[3] ॥१४॥

१७५ प्रातः स्मेरसरोरुहामयमुपाध्यायो दृशोर्विभ्रमः
पाणिः कोकिलवाणि पल्लवसहाध्यायी समुन्मीलति ।
सन्दर्भो वचसां पचेलिमसुधासिद्धान्तवैतण्डिको
जानीमः कुसुमायुधस्य भगवान् भाग्यालये भार्गवः ॥१५॥

---

सुधायाः सध्रीची न च वचनवीची विजयते
कुचश्रीः कर्कन्धूफलमपि न बन्धूकृतवती ।
न शीलं दृग्भङ्गी कलयति कुरङ्गीनयनयो-
स्तथापि श्रीरस्या युवजननमस्या विलसति ॥

—कस्यापि

ग-प्रतौ एवम्—
सुधाया·········विजयते, तथापि·········विलसति । न शीलं·········नयनयोः, कुचश्रीः····· ···कृतवती ॥

—कस्यापि

१. क विलोचनं । २. ग °रिवान्तरालक्ष्यते । ३. क एतदनन्तरं 'त्रिविक्रमस्य' इति लिखति ।

१७६ वाणी कार्तिकरोहिणीपतिवलत्पीयूषकल्लोलिनी
धत्ते दृष्टिरकालकुन्दकलिकालावण्यलीलायितम् ।
नो जाने गमयिष्यतस्तव चिरादङ्के दिनं केलिभिः
कस्य श्रीफलपीवरस्तनि भवेदेकादशस्थो गुरुः ॥१६॥

—भानुकरस्यैतौ[1]

१७७ उदञ्चद्वक्षोजद्वयतटभरक्षोभितकटि-
स्फुरद्दृग्भ्यां मन्दीकृतविलसदिन्दीवरयुगम् ।
समुद्यद्भ्रूभङ्गप्र[2] विहितधनुर्भङ्गमनिशं
वयस्तत्पद्माक्ष्याः कथमिव मनो न व्यथयतु ॥१७॥

—लक्ष्मणस्य

## अथ बालावयववर्णनम्

### तत्र केशपाशः[3]

१७८ आभाति शोभातिशयप्रपञ्चादेणीदृशोऽस्या रमणीयशोभा ।
वेणी लसत्कुन्तलधोरणीनां श्रेणीव किं चारुहरिन्मणीनाम् ॥१८॥

— लक्ष्मणस्य

१७९ आभुग्नाङ्गुलिपल्लवौ कचभरे व्यापारयन्ती करौ
बन्धोत्कर्षनिवद्धमानसतया शून्यां दधाना दृशम् ।
बाहूत्क्षेपसमुन्नते कुचतटे पर्यस्तचोलांशुका
ह्रीसङ्कोचितबाहुमूलसुभगं बध्नाति जूटीं वधूः ॥१९॥

—कस्यापि

## अथ सीमन्तसिन्दूरम्[4]

१८० अये मातर्दृष्ट्वा मुखममृतभानुभ्रमवशात्
कचच्छद्मा राहुर्वसति किमु तृष्णातरलितः ।

---

१. क एतौ भानु°, ग नास्ति लिखितम् । २. क °भङ्ग प्र° । ३. क केशकलापः ।
४. ग सिन्दूरं सीमन्तस्य ।

किमेवं कन्दर्पान्तकतरुणि सिन्दूरसरणि-
च्छलाद् भोक्तुं भूयो बहिरिव रसज्ञां रचयति ॥२०॥

—भानुकरस्य

## अथ[1] भालसिन्दूरम्

१८१ यस्याः संयमवान् कचो मधुकरैरभ्यर्थ्यमानो मुहु-
र्भृङ्गीगोपनजाभिशापमचिरादुन्मार्ष्टुं कामो निजम् ।
सीमन्तेन करेण कोमलरुचा सिन्दूरबिन्दुच्छला-
दातप्तायसपिण्डमण्डलमसावादातुमाकाङ्क्षति ॥२१॥

—गण[2]पतेः

## अथालकः

१८२ भालस्थली चन्द्रकलाकलङ्कलेखासु संतक्ष्य ततो विमुक्ता ।
सैव क्रमात् कुण्डलिता कपाले[3] यत्रालकानां श्रियमातनोति ॥२२॥

—गणपतेः

## अथाननम्

१८३ अस्यैव रम्भोरु तवाननस्य दृशैव सञ्जीवितमन्मथस्य ।
वनं विधाता ननु नीरजानां नीराजनार्थं किमु निर्मिमीते ॥२३॥

१८४ अस्यामपूर्व इव कोऽपि कलङ्करिक्त-
श्चन्द्रोऽपरः किमुत तन्मकरध्वजेन ।
रोमावलीगुणमिलत्कुचमन्दरेण
निर्मथ्य नाभिजलधिं स्वयमुत्थितः स्यात् ॥२४॥

—एतौ लक्ष्मणस्य[4]

१८५ विनाः सायं कोऽयं समुदयति सौरभ्यसुभगः
किरञ्ज्योत्स्नाधारामधिधरणि तारापरिवृढः ।
धनुर्धत्ते स्मारं तिरयति विहारं न तमसां
निरातङ्कः पङ्केरुहयुगलमङ्के नटयति ॥२५॥[5]

---

१. ग 'अथ' इति नास्ति । २. क भानुकरपितुर्गण° । ३. ग कपोले । ४. क °स्यैतौ ।
५. क एतत्पद्यानन्तरं 'भानुकरस्य' इति लिखित्वा पद्यमिदं लिखति—

## अथ भ्रुवौ

१८६ स्मरकल्पद्रुमो बाले तव भाले द्विपत्रितः ।
पत्रयोरनयोश्छाया भ्रुवोर्व्याजादुदञ्चति ॥२६॥[1]

—भानुकरस्यैतौ

१८७ भ्रूरेखायुगलं भाति तस्याश्चपलचक्षुषः ।
पत्रद्वयीव हरिता नासावंशविनिर्गता ॥२७॥

—बिल्हणस्य

१८८ कर्णौ तावत्कुवलयदृशां[2] लोचनाम्भोरुहाभ्या-
मभ्याक्रा[3]न्तौ कनकरुचिरो भालदेशोऽपि नेयः ।
इत्याशङ्काकुलितमनसा वेधसा कज्जलौघैः
सं मारेखा व्यरचि निविडभ्रूलताकैतवेन ॥२८॥

—गणपते

## अथ नयनम्

१८९ नयनस्य तुलां चक्रे नलिनेन न[4]तभ्रुवः ।
ऊने च नलिने भृङ्गमापमेप विधिर्दधे ॥२९॥

—भानुकरस्य

१९० नतभ्रुवो लोचनखञ्जरीटौ विहारमानङ्गमिहारभेते ।
कथं न सानन्दहृदो युवानस्तारुण्यमन्तर्निधिमुन्नयन्तु ॥३०॥

—गणपतेः

---

कोशः स्फीततरः स्थितानि परितः पत्राणि दुर्गं जलं
मन्त्रैर्मण्डलमुज्ज्वलं चिरमधो नीतास्तथा कण्टकाः ।
इत्याकृष्टशिलीमुखेन रचनां कृत्वा यदस्य (स्या) द्भुतं
[य] त्पद्मेन जिगीषुणाऽपि न जितं मुग्धे तदीयं मुखम् ॥

— विज्जकायाः

*ग* प्रतौ अस्पष्टाक्षरत्वात् सम्यक् पठितुमशक्यमपि किञ्चिदेवं पठितम्—
केशः''' स्थितः''''निजः पत्राणि '' त्वदीयं मुखम् ॥

—विज्जकायाः

१. *क* पद्यमिदं नास्ति । २. *क ग* °दृशो । ३. *ग* °माभ्यां क्रा° । ४. *क* नलिनं विन ।

१९१ दृशौ किमस्याश्चपलस्वभावे न दूरमाक्रम्य मिथो मिलेताम् ।
न चेत्कृतः स्यादनयोः प्रयाणे विघ्नः श्रवःकूपनिपातभीत्या ॥३१॥

—श्रीहर्षस्य

## अथापाङ्गः

१९२ पिपासुरिव सञ्चलन्निकटकर्णकूपाञ्चलं
ततः प्रतिवलन् पुनः श्रवणपाशभीतोऽभितः[1] ।
तनोति तरलाकृतिस्तरललोचने सन्ततं
गतागतकुतूहलं मुहुरपाङ्गरङ्कुस्तव ॥३२॥

१९३ क्वचित् कृष्णार्जुनगुणा क्वचित् कर्णान्तगामिनी ।
अपाङ्गश्रीस्तवाभाति सुभ्रु भारतगीरिव ॥३३॥

—लक्ष्मणस्यैतौ

१९४ यासां कटाक्षविशिखैः स्मरचौरेण ताडिताः ।
हृतचैतन्यसर्वस्वा मुह्यन्ते मुग्धकामुकाः ॥३४॥

—शार्ङ्गधरस्य

१९५ वतंसनीलोत्पलषट्पदानां गीतामृतं श्रोतुमिवोत्तरङ्गौ ।
नतभ्रुवो लोचनकृष्णसारौ कर्णान्तिकं सन्ततमाश्रयेते ॥३५॥

—गणपतेः

## अथ नासामौक्तिकम्

१९६ तारापतेर्बिम्बमिव त्वदास्यं[2] सम्भाव्य भूमीतलशालिनं किम् ।
नासाग्रमुक्ताफलकैतवेन ताराऽपि काचिद् विहितावतारा ॥३६॥

—लक्ष्मणस्य

१९७ सुधामयोऽपि क्षयरोगशान्त्यै नासाग्रमुक्ताफलकच्छलेन[3] ।
अनङ्गसञ्जीवनदृष्टिशक्ति मुखामृतं ते पिबतीव चन्द्रः ॥३७॥

—वैद्यनाथस्य

---

१ क ग °भीतः किमु । २. क ग त्वदीयवक्त्रं किमु चन्द्रबिम्बं । ३. ग °फलकैतवेन ।

## अथ कर्णताटङ्कम्

१९८ शशी हर्तु[1] लोभान्मुखकमलशोभां[1] श्रुति[2]तलं
सिषेवे स्वातङ्कस्तव तरुणि[3] ताटङ्ककपटात्।
तदन्तः पीयूषं निखिलमथ निक्षेप्तुमधरे[4]
मनोजन्मा मुष्णन् मुहुरहह तुच्छं तमकरोत् ॥३८॥

—रामचन्द्रस्य

१९९ ताटङ्कमस्यास्तरलेक्षणाया मुक्ताफलैश्चारुरुचं विधत्ते।
मुखश्रिया चन्द्रमिवाभिभूय वन्दीकृतं तारकचक्रवालम् ॥३९॥

—बिल्हणस्य

## अथाधरः

२०० तवैष विद्रुमच्छायो मरुमार्ग इवाधरः।
करोति कस्य नो मुग्धे पिपासाकुलितं मनः ॥४०॥

—कस्यापि

## अथ कण्ठः

२०१ कण्ठस्य विदधे कान्तिं मुक्ताभरणता यथा।
नास्य स्वभावरम्यस्य मुक्ताभरणता तथा ॥४१॥

—शकवृद्धेः

२०२ मातङ्गकुम्भसंसर्गजातपातकशङ्कया।
स्नातीव मुक्ताहारोऽस्याः स्फुरत्कान्तिजले गले[5] ॥४२॥

वैद्यभानोः

## अथ बाहू

२०३ शब्दवद्भिरलङ्कारैरुपेतमतिकोमलम्।
सुवृत्तं काव्यवद् रेजे तद्बाहुलतिकाद्वयम् ॥४३॥

—शकवृद्धेः

१. क ग °शोभाः। २. क श्रुत°। ३. क तरणि। ४. क °मधुरे। ५. ग °गले जले।

२०४ दयितावाहुपाशस्य कुतोऽयमपरो विधिः ।
जीवयत्यर्पितः कण्ठे मारयत्यपवर्जितः ॥४४॥

—भासस्य[1]

अथाङ्गुल्यः

२०५ सुदीर्घरेखाशा[2]लिन्यो बहुपर्वमनोहराः ।
तस्या विरेजुरङ्गुल्यः कामिनां स[3]ङ्कथा इव ॥४५॥

—शकवृद्धेः

अथ स्तनौ

२०६ तवोपकण्ठ[4]स्थिततारहारस्फुरत्प्रभाशैवलिनीजलेषु ।
लीनो मनोजद्विप एव तस्य व्यक्तौ तु गण्डौ किमुरोजपिण्डौ ॥४६॥

—लक्ष्मणस्य

२०७ सतां समालोकयतां विवेकान् हवींषि हुत्वा स्मरवाणवह्नौ ।
धत्ते स्तनश्या[5]मशिरोमिषेण तनूदरी[6] त्र्यायुषभस्मबिन्दुम् ॥४७॥

—भानुकरस्य

२०८ मध्योऽयं वलिसद्म दृष्टिरधिकं पृथ्वी सुपर्वालयो
वाहुस्तत्कमलेक्षणा त्रिजगतीमेकैव संरक्षति ।
इत्येवं स्तनयोर्मिषेण कनकक्षोणीभृता सम्भृतौ[7]
यस्यामात्मकिशोरकौ पविभयव्यग्रेण जम्भद्विषः ॥४८॥

—गणपतेः

अथ हारः

२०९ सारङ्गाक्ष्या कुचकलशयोरन्तराकाशदेशः
प्राप्तच्छेदः क्वचिदपि चलन् प्रस्खलन्निष्प[8]पात ।

---

१. ग 'भासस्य' इति नास्ति । २. क ग सुदीर्घा रागशा° । ३. ग कामिनीसं° । ४. क ग अस्यास्तु कण्ठ° । ५. ग स्तनः श्या° । ६. क ग °दरि । ७. संधृतौ । ८. क निःप° ।

नाभीकूपः समजनि ततस्तस्य देहच्युताऽसौ
नक्षत्राणां ततिरिव समालम्बते हारशोभाम्[1] ॥४९॥

—भानुकरस्य

अथ मध्यः

२१० नूनं कलत्रात् किमुपद्रुतोऽयं दीनः क्वचिल्लीन इवास्त मध्यः।
तत्राप्सरःसन्निभया च नाभ्या दूनस्ततोऽन्तर्हित एव सद्यः ॥५०॥

—लक्ष्मणस्य

२११ देहं हेमद्युति परिहृताम्भोजवृष्टिं च दृष्टिं
राशीभूतभ्र[2]मरपटलीचारुवेशं च केशम्।
दृष्ट्वा सद्यो विपुलहृदयानन्दमूढेन धात्रा
सारङ्गाक्ष्याः किमु रचयितुं विस्मृतो मध्यदेशः[3] ॥५१॥

२१२ तुङ्गाभोगे स्तनगिरियुगे प्रौढबिम्बे नितम्बे
सीमादेशं हरति नृपतौ यौवने जृम्भमाणे।
मध्यो भीरुः क्वचिदपि ययौ पद्मपत्रेक्षणायाः
शून्यं मध्यस्थलमिति ततः सर्वतः किंवदन्ती ॥५२॥

—भानुकरस्यैतौ

२१३ बध्वा वयो मां त्रिवलीगुणेन गृह्णाति रोमावलिवेत्रवल्लीम्।
इतीव चिन्ताभरभङ्गुरोऽयं मध्यो मृगाक्ष्याः कृशतामुपैति ॥५३॥

२१४ तस्या मुखेन्दोरवलोकनेन कराम्बुजं कुड्मलितं विधातुः।
मध्यस्तदन्तर्गमनादिवासौ कृशाङ्गयष्टेः कृशिमानमाप ॥५४॥

—द्वौ गणपतेः

अथ रोमावली

२१५ बाले तवोरोजसुवेलशैलं गतानुवेलं किमु कामरामः।
लावण्यपूरे तव सिन्धुनीरे रोमालिरस्यैव किमालिबन्धः ॥५५॥

१. *ग* इतोऽग्रे केनचिदन्यया लेखन्या उपरि टिप्पण्यां पद्यमिदं लिखितम्—
अपूर्वो दृश्यते वह्निः कामिन्याः कुचमण्डले।
दूरतो दहते गात्रं हृदि लग्नस्तु शीतलः ॥ [भर्तृ० सं० ३७१]

२. *क* °भूता भ्र°। ३. *क ग* °भागः, *क* एतत्पद्यानन्तरं 'एतौ भानुकरस्य' इति लिखति।

२१६ संलक्ष्यते सम्प्रति पक्ष्मलाक्षि क्षामा तवेयं नवरोमराजिः ।
किं बालभावश्रिय एव नूनं निराकृतायाः इव बाष्पराजिः ॥५६॥

—लक्ष्मणस्यैतौ[1]

२१७ गम्भीरनाभीह्रदसन्निधाने रराज तन्वी नवरोमराजिः ।
मुखेन्दुभीतस्तनचक्रवाकचञ्चुच्युता शैवलमञ्जरीव ॥५७॥

—लक्ष्मीधरस्य

२१८ हरक्रोधज्वालावलिभिरवलीढेन वपुषा
गभीरे ते नाभीसरसि कृतझम्पो मनसिजः ।
समुत्तस्थौ तस्मादचलतनये धूमलतिका
जनस्तां जानीते तव जननि रोमावलिरिति ॥५८॥

—शङ्कराचार्यस्य

२१९ यूनां धैर्यतृणाङ्कुरं कवलयन् व्रीडाम्बुपूरं पिबन्
शृङ्गारो हरिणस्तव स्तनगिरेः सीमानमारोहति ।
नाभेः काचन तस्य निःसृतवती कस्तूरिकामालिका
रोमश्रेणिमहोत्सवं वितनुते कल्याणि जानीमहे ॥५९॥

२२० निर्णेतव्यो मनसिजकलातन्त्रसिद्धान्तसारो
जेतव्या च त्रिदशसुदृशामङ्गलावण्यलक्ष्मीः ।
रोमश्रेणीलिखनसुभगं पत्रमादर्शयन्ती
पत्रालम्बं जगति कुरुते सुभ्रुवो यौवनश्रीः ॥६०॥

—भानुकरस्यैतौ[2]

२२१ पयोधरस्तावदयं समुन्नतो रसस्य वृष्टिः सविधे भविष्यति ।
अतः समुद्गच्छति नाभिरन्ध्रतो विसारिरोमालिपिपीलिकावलिः ॥६१॥

—गणपतेः

अथ जघनम्

२२२ तस्याः पद्मपलाशाक्ष्यास्तन्व्यास्तज्जघनं घनम् ।
दृष्टं सखीभिर्याभिस्ताः पुम्भावं मनसा ययुः ॥६२॥

—वाल्मीकेः

---

१. क द्वौ लक्ष्मणस्य । २. क एतौ भानुकरस्य ।

अथोरुः (रू)

२२३ नूनमूरुद्वयं तस्या रम्भा चपलचक्षुषः ।
सूते यत्कीर्तिकर्पूरपूरं मदनभूपतेः ॥६३॥

—भानुकरस्य

अथ पादौ

२२४ अमूल्यस्य मम स्वर्णतुलाकोटिद्वयं कियत् ।
इति कोपादिवाताम्रं पादयुग्मं मृगीदृशः ॥६४॥

—बिल्हणस्य

अथेतस्ततो वर्णनम्

२२५ जानीमो वयमासनस्य कमले तस्या मुखेन्दोस्त्विषा
सङ्कोचं समुपागते स भगवान् दुःस्थः सरोजासनः ।
भुग्नं भ्रूलतिकायुगं विहितवान् वक्रे दृशौ सृष्टवान्
मध्यं विस्मृतवान् कचं च कुटिलं वामभ्रुवः क्लृप्तवान् ॥६५॥

२२६ जानीमो वदनं सरोरुहदृशो निर्माय पश्यन् मुहु-
र्दृप्यत्का[1]मकठोरपावकशिखासन्तापितः पद्मभूः ।
रम्भामूरुतटीं स्तनं रसघटीं[2] पीयूषवीचीं वचो
बाहू बालबिसं करं किसलयं नाभीं सरो निर्ममे[3] ॥६६॥

२२७ व्याकोशकोकनदशोककरः करोऽयं
खेलच्चकोरमदचोरमिदञ्च चक्षुः ।
उन्निद्र[4]विद्रुमरहस्यहरोऽधरोऽयं
तत्स्यादरण्यमपि वश्यमवश्यमस्याः ॥६७॥

—भानुकरस्यैते[5]

इति श्रीआङ्कोलकरलक्ष्मणभट्टकृतायां[6] पद्यरचनायां चतुर्थो व्यापारः ।

● ● ●

१. ग दृंप्यत्का° । २. क ग °तटीं° । ३. क निर्ममौ । ४. का-मा उद्भिन्नेति पाठ० । ५. क स्यैतौ । ६. क °भट्टकृतौ, ग °भट्टविरचितायां ।

# पञ्चमो व्यापारः

## अथ विरहिणीवर्णनम्

२२८ लसन्मल्ली[1]माल्यं मदनशरशल्यं हि मनुते
सुपूरं कर्पूरं विमलमपि दूरं विकिरति।
परं तारं हारं पुनरुरसि भारं कलयतां
यदि प्राणान् बाला कलयति च हालाहलमिव[2] ॥१॥

२२९ इयं धत्ते धीरे मलयजसमीरे न च मुदं
न पद्मानां वृन्दे ललितमकरन्देऽपि रमते।
न वा सा सानन्दा भवति नवकुन्दावलिकुले
तदेतस्या बाधाहरमपि समाधानमिह किम् ॥२॥

२३० स्थगयति नयनाब्जं छद्मना धूमधूम्रं[3]
प्रथयति च नितान्तं कार्श्यमङ्गप्रकृत्या।
अहह विरहबाधां छादयत्य[4]म्बुजाक्षी
तदपि वदति साक्षी पाण्डुरो गण्डदेशः ॥३॥

—लक्ष्मणस्यैते[5]

२३१ घनोऽयं चेदञ्चेदुपरि विकिरंश्चन्दनरसा-
नुदारा नैहारी सरिदुरसि हारीभवति वा।
समन्तान्मार्णाली चिरमुपवनाली मिलति वा
तदप्यस्यास्तापो हरिविरहजः किं विरमति ॥४॥

२३२ चुलुकयसि चन्द्रदीधितिमविरलमश्नासि नूनमङ्गारान्।
अधिकतरमुष्णमनयोः किमिह चकोरावधारयसि ॥५॥

—रामचन्द्रस्यैतौ[6]

---

१. क ललद्वल्ली°, ग ललन्मल्ली°। २. क °लमियम्। ३. क ग °भूम्नां। ४. क गोप[य]त्य°। ५. क एते लक्ष्मणस्य। ६. द्वौ रामचन्द्रस्य।

२३३ उद्धूयेत तनूलतेति बिसिनीपत्रेण नो वीज्यते
स्फोटः स्यादिति नाङ्कं मलयजक्षोदाम्भसा सिच्यते ।
स्यादस्यातिभरातपराभव इति श्वासान्न वा पल्लवा-
रोपो वक्षसि तत्कथं वरतनोर्बाधा समाधीयते ॥६॥

—जयदेवस्य

२३४ चित्राय त्वयि चिन्तिते स्मृतिभुवा सज्जीकृतं स्वं धनु-
र्वर्तिं धर्त्तुमुपागतेऽङ्गुलियुगे बाणा गुणे योजिताः ।
आरब्धे तव चित्रकर्मणि पुनस्तद्बाणभिन्ना सती
भित्तिं द्रागवलम्ब्य सिंहलपते सा तत्र चित्रायते ॥७॥

—कस्यापि

२३५ परिम्लानं पीनस्तनजघनसङ्गादुभयत-
स्तनोर्मध्यस्यान्तः परिमिलनमप्राप्य हरितम् ।
इदं व्यस्तन्यस्तं श्लथभुजलताक्षेपवलनैः
कृशाङ्ग्याः सन्तापं वदति बिसिनीपत्रशयनम् ॥८॥

—कालिदासस्य[1]

२३६ व्यजनं व्यजनं जलं जलं घनसारो घनसार इत्यभूत् ।
अवरोधपुरेषु[2] सुभ्रुवां कुररीणामिव कातरो ध्वनिः ॥९॥

—कस्यापि

२३७ हन्तालि सन्तापनिवृत्तयेऽस्याः किं तालवृन्तं तरलीकरोषि ।
सन्ताप एषोऽन्तरदाहहेतुर्न तभ्रुवो न व्यजनापनोद्यः ॥१०॥

—वाहिनीपतेः

२३८ लतामूले लीनो हरिणपरिहीनो हिमकरः
स्खलन्मुक्ताकारा गलति जलधारा कुवलयात् ।
धुनीते बन्धूकं तिलकुसुमजन्माऽपि पवनो[3]
गृहद्वारे पुण्यं परिणमति कस्यापि कृतिनः ॥११॥

---

१. क श्रीहर्षस्य । २. क °गृहेषु । ३. का-मा '°जन्माऽयमनिलो' इति पाठ० ।

२३९ अधिदेहलि हन्त देह[1]वल्ली शरदिन्दुः सरसीरुहे शयानः ।
अधिखञ्जनचञ्चु मौक्तिकाली फलितं तस्य सुजन्मनस्तपोभिः ॥१२॥

—एतौ षाण्मासिकस्य

२४० धाटीश्चेतोभवनरपतौ कुर्वति क्रूरचापे
काञ्ची जाता कलकलवती कुन्तलो निष्पपात[2] ।
अङ्गे तापज्वरपरिभवः प्रादुरासीदसीमो
लेभे कम्पावलिभिरतुलं चापलं चोल[3]देशः ॥१३॥

२४१ शङ्के पङ्केरुहदलदृशो वीक्ष्य वेणीं विलग्नां
पत्युः प्राप्त्यै शिव शिव घनं बन्धनं केशपाशः ।
वाग्वैदग्ध्यं वपुरुपचयं लास्यमास्येन्दुबिम्बं
चेतो धैर्यं नयनयुगलं चातुरीमुत्ससर्ज ॥१४॥

२४२ नयनोत्पलजलधारां दृष्ट्वा वारांनिधिभ्रान्त्या ।
वडवानल इव भगवान् भ्रमति तनौ कृशतनोस्तापः ॥१५॥

२४३ लीनानसून् सरोरुहदृष्टेरन्वेष्टुमेव विषमेषुः ।
भ्रमति द्राग्[4] वपुरन्तःसन्तापं दीपमादाय ॥१६॥

२४४ चूडारत्नमपांनिधिर्यदि भवेच्चेत्कुण्डलं गण्डकी
कावेरी यदि कङ्कणं यदि पुनर्ग्रैवेयकं गौतमी ।
मुक्तास्रक् सुरनिम्नगा यदि यदि स्यान्मेखला नर्मदा ।
कौशेयं यदि कौशिकी कृशतनोस्तापस्तदापैति वा ॥१७॥

२४५ जीवेन तुलितं प्रेम सखि मूढेन वेधसा ।
लघुर्जीवो ययौ कण्ठं गुरु प्रेम हृदि स्थितम् ॥१८॥

—षडेते भानुकरस्य

२४६ तस्यास्तनौ विरहताण्डवरङ्गभूमौ
स्वेदोदबिन्दुकुसुमाञ्जलिमाविकीर्य ।
नान्दीं पपाठ पृथुवेपथुवेपमान-
काञ्चीलताकलरवैः स्मरसूत्रधारः ॥१९॥

१. क हेम° । २. क °न्तली यो पपात । ३. क लोच° । ४. क प्रति° ।

२४७ श्रीखण्डद्रवदीर्घिकापरिवृतप्रान्तासु निःशेषतः
प्रालेयाचलकन्दरासु विहितक्रीडासु मन्दानिलैः ।
माघीभिः क्षणदाभिरेव जनितं गण्डोपधानीभव-
च्चन्द्रं तल्पमपाकरिष्यति न वा सन्तापमेणीदृशः ॥२०॥

२४८ मदकलकृतान्तकासरखुरपुटनिर्धूतधूलिसङ्काशम् ।
केतकरजो निवार्यं सखि यदि कार्यं मम प्राणैः ॥२१॥

२४९ जानीमस्तव गौरि चेतसि चिरं शम्भुः समुज्जृम्भते
तापो नेत्रतनूनपादिव तनौ तीव्रः समुन्मीलति ।
अक्ष्णोरश्रुमिषेण गच्छति बहिर्गङ्गातरङ्गावलिः
पाण्डिम्नः कपटेन चन्द्रकलिकाकान्तिः समुन्मीलति ॥२२॥

२५० प्रियसखि न तथा पटीरपङ्को न च नलिनीदलमारुतोऽपि शीतः ।
शमयति मम देहदाहमेतं सपदि कथाऽपि तथा नरेन्द्रसूनोः ॥२३॥

—पञ्चैते गणपतेः

## अथ स्मरोपालम्भः[1]

२५१ हृदयमाश्रयसे यदि मामकं ज्वलयसि त्वम[2]नङ्ग तदेव किम् ।
स्वयमपि क्षणदग्धनिजेन्धनः क्व भवितासि हताश हुताशवत् ॥२४॥

—श्रीहर्षस्य

२५२ शिव शिव सहसैव पुष्पधन्वा प्रलयनटेन किमित्यकारि भस्म ।
भ्रमयति जगदेष यत्पिशाचः स च मणिमन्त्रमहौषधैर्न साध्यः ॥२५॥

—वाणीविलासस्य

इति श्रीआ[3]ङ्कोलकरलक्ष्मणभट्टकृतायां[4] पद्यरचनायां पञ्चमो व्यापारः ।

● ● ●

१. ग 'अथ स्मरोपालम्भः' इति नास्ति । २. क °लयदीप्यम°, ग °लयसीत्यम° । ३. ग इत्याङ्को° । ४. क ग °भट्टकृतौ ।

## षष्ठो व्यापारः

### अथ नायकविप्रलम्भः

२५३ हारो नारोपितः कण्ठे स्पर्शसंरोधभीरुणा[1] ।
इदानीमन्तरे जाताः सरित्सागरपर्वताः ॥१॥

—वाल्मीकेः[2]

२५४ दिव्यचक्षुरहं जातः सरागेणापि चक्षुषा ।
इहस्थो येन पश्यामि देशान्तरगतां प्रियाम् ॥२॥

—कस्यापि

२५५ किमकारि मन्दमतिना रतिपतिना नीतितन्त्रनिपुणेन ।
स्यूताऽसि हरिणनयने हन्त हृदि स्नेहतन्तुना न तनौ ॥३॥

—रामचन्द्रस्य

२५६ समुत्कीर्णे तन्व्या निशितनयनान्तेन मृदिते
स्तनद्वन्द्वस्पन्दैः स्मितलवसुधाभिः प्लुतिमति[3] ।
मदन्तःकेदारे मदनकृषिकारेण जनिता
चिरादाशावल्ली किमिति न फलं हन्त लभते ॥४॥

—मैथिलस्य

२५७ श्रीखण्डानिल निर्वृतो भव सखे सिद्धानुभावो भवान्
भ्रातः कोकिल साधितं निजहितं मूकत्वमालम्ब्यताम् ।
शीतांशो विहितं यशो बहुतरं तत्तात विश्रम्यता-
मस्मत्प्राणबहिःप्रयाणपटहो दध्वान धन्योऽम्बुदः ॥५॥

—कस्यापि

---

१. *का-मा* 'मया विश्लेषभीरुणा' इति पाठा० । २. *क* 'वाल्मीकेः' इति नास्ति ।
३. °सुधाभिप्लुतमपि, *ग* °सुधाभिप्लुति° ।

२५८ रे सारङ्गा वनवसतयस्तत्त्वमाख्यात यूथं
कुत्राधीतं त्रिभुवनमनोहारि चाञ्चल्यमक्ष्णोः ।
आं जानीमो गमनसमये हन्त कान्तारसीम-
न्येकाकिन्याः[1] कुवलयदृशो लुण्ठिता यौवनश्रीः ॥६॥

—उमा[2]पत्युपाध्यायस्य

२५९ अत्रासितं शयितमत्र निपीतमत्र
तोयं तया सह मया विधिवञ्चितेन ।
इत्यादि हन्त परिचिन्तयतो वनान्ते
रामस्य लोचनपयोभिरभूत् पयोधिः ॥७॥

—कस्यापि

२६० खं यान्ति नो नीरधरा न यावच्छम्पा न झम्पाकुलिताश्च चेलुः ।
रामस्य तावन्नयनाम्बुपूरैः पम्पा तु सम्पातिभिरापुपूरे ॥८॥

२६१ वसन्त किं हन्त तनोषि तापं माकन्द मन्दं क्षिप मा मरन्दम् ।
अचण्ड[3]भानो जहि चण्डभावं रामस्य कोपी खलु कोऽपि कालः ॥९॥

२६२ माकन्द क्षिप मा मरन्दनिकरं मूको भव त्वं शुक
स्फारं कोकिल कोमलं कलरवं भ्रातः[4] क्षणं संहर ।
सौगन्ध्यं वह गन्धवाह न मनाक् सर्वैः क्षणं क्षम्यतां
जानीध्वं रघुनायकस्य[5] यदयं कालः करालो महान् ॥१०॥

—लक्ष्मणस्यैते

२६३ त्वामालिख्य प्रणयकुपितां धातुरागैः शिलाया-
मात्मानं ते चरणपतितं यावदिच्छामि कर्तुम् ।
अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे
क्रूरस्तस्मिन्नपि न सहते सङ्गमं नौ कृतान्तः ॥११॥

२६४ तस्मिन् काले जलद यदि सा लब्धनिद्रासुखा स्या-
त्तत्रासीनः स्तनितविमुखो याममात्रं सहस्व ।

---

१. ग °किन्यः । २. ग 'उमा' इति नास्ति । ३. ग आचण्ड° । ४. क भ्राता ।
५. का-मा 'तरुणस्य तस्य' इति पाठ० ।

मा भूदस्याः प्रणयिनि मयि स्वप्नलब्धे कथञ्चित्
सद्यः कण्ठच्युतभुजलताग्रन्थि गाढोपगूढम् ॥१२॥

—कालिदासस्यैतौ[1]

२६५ यत्त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरं
मेघैरन्तरितः प्रिये तव मुखच्छायानुकारी शशी ।
येऽपि त्वद्गमनानुसारिग[2]तयस्ते राजहंसा गता-
स्त्वत्सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते ॥१३॥

२६६ वनी मुनीनां तटिनी तरूणां दरी गिरीणाञ्च गवेषितैव ।
अतः परं लक्ष्मण पक्ष्मलाक्षीं प्राणा बहिर्भूय गवेषयन्तु ॥१४॥

—कस्याप्येतौ[3]

२६७ जाने कोपपराङ्मुखी प्रियतमा स्वप्नेऽद्य दृष्टा मया
मा मा संस्पृश पाणिनेति रुदती गन्तुं प्रवृत्ता ततः ।
नो यावत्परिरभ्य चाटुकशतैराश्वासयामि प्रियां
भ्रातस्तावदहं शठेन विधिना निद्रादरिद्रीकृतः[4] ॥१५॥

—निद्रादरिद्रस्य

२६८ कुवलयनयनाकुचान्तरेषु[5] क्षणमपि येषु न शेरते युवानः ।
शिव शिव करुणापराङ्मुखोऽयं गणयति तान्यपि वासराणि वेधाः ॥१६॥

२६९ पुनरपि मिलनं यदाकदाचित् प्रियतमया कृपया भवेद् विधातुः ।
हरिरिव करवै हृदि प्रतिष्ठां हर इव किं तनवै तनोरभिन्नाम् ॥१७॥

—कस्याप्येतौ

२७० अद्यापि तन्मनसि सम्परिव[6]र्तते मे
रात्रौ मयि क्षुतवति क्षितिपालपुत्र्या ।
जीवेति मङ्गलवचः परिहृत्य कोपात्
कर्णे कृतं कनकपत्रमनालपन्त्या ॥१८॥

—बिल्हणस्य

---

१. क एतौ कालिदासस्य । २. क ग °नुकारिग° । ३. कयोरप्येतौ । ४. ग °दरिद्रः कृतः । ५. का-मा '°भुजान्तराले' इति पाठा० । ६. ग सम्प्रति व° ।

२७१ स्खलदंशुकमव्यवस्थतारं स्मितकान्तिस्नपिताधरप्रवालम् ।
असमाप्तनकारमाप्तशोभं हरिणाङ्कं हरिणीदृशः स्मरामः ॥१९॥

२७२ कुन्दं दन्तैर्मधु निगदितैः षट्पदीं दृग्विलासै-
रेभिर्हासैरमृतलहरीं कुन्तलैरम्बुवाहम् ।
इन्दोर्बिम्बं वदनशशिना पङ्कजं च स्तनाभ्यां
त्वं जित्वा मे वससि हृदये तेन ते मां द्विषन्ति ॥२०॥

—भानुकरस्यैतौ

इति श्रीआङ्कोलकरलक्ष्मणभट्टविरचितायां[1] पद्यरचनायां षष्ठो व्यापारः ।

• • •

१. क ग °भट्टकृतौ ।

## सप्तमो व्यापारः

२७३ अथ संक्षेपतो वक्ष्ये मृगाक्षीणामवान्तरम् ।
भेदं बुधाः सुधाकल्पं तमाकल्पं भजन्त्वमी ॥१॥

### अथ कुलाङ्गना

२७४ प्रेरयन्ति हृदयं न लोचनं नर्तयन्ति मदनं न दुर्यशः ।
वारयन्त्यविनयं न सम्भ्रमं स्नेहसारशरणं कुलस्त्रियः ॥२॥

—गणपतेः

२७५ पदन्यासो गेहाद् वहिरहिफणारोपणसमो
वचो लोकालभ्यं कृपणधनतुल्यं मृगदृशः ।
निजावासादन्यद् भवनमपरद्वीपतुलितं
पुमानन्यः कान्ताद् विधुरिव चतुर्थीसमुदितः ॥३॥[1]

—लक्ष्मणठक्कुरस्य

२७६ गतागतकुतूहलं नयनयोरपाङ्गावधि
स्मितं कुलनतभ्रुवामधर एव विश्राम्यति ।
वचः प्रियतमश्रुतेरतिथिरेव कोपक्रमः
कदाचिदपि चेत्तदा मनसि केवलं मज्जति ॥४॥

—भानुकरस्य

२७७ लज्जावशान्नमितमन्थरदृष्टिपातं
यैश्चुम्बितं[2] कुलवधूवदनारविन्दम् ।
तेषामनेकपुरुषव्रणिताधरेषु
तृप्तिः कथं भवति वेशवधूमुखेषु ॥५॥

—कस्यापि

---

१. क पद्यमिदं नास्ति । २. क यश्चंवितं (यैः सेवितं ?) ।

## अथ कुलाङ्गनाकोपः

२७८ नारुण्यं मुखमण्डले न च वचोवैदग्ध्यमन्यादृशं
न भ्रूभङ्गपरिग्रहो न च रहःप्रश्नेऽपि मौनस्थितिः ।
एवं सम्प्रति तर्क्यते तु सुदृशः कोपस्तु यद्[1] वस्तुनि
स्वाधीने पुनरेव[2] पङ्कजदृशो यन्न प्रभुत्वग्रहः[3] ॥६॥

— गणपतेः

२७९ मय्यायाते सपदि शयनादुत्थितं चारु[4]वाक्यं
बध्वा पाणी बहु निगदितं क्षालितं पादपद्मम् ।
दत्वा वीटीं सविनयमथोद्वीजितं तालवृन्तै-
र्न्ते कोपं कुवलयदृशो भूयसी भक्तिरेव[5] ॥७॥

## अथ प्रोष्यत्प[6]तिका

२८० नायं मुञ्चति सुभ्रुवामपि तनुत्यागे वियोगज्वर-
स्तेनाहं विहिताञ्जलिर्यदुपते पृच्छामि सत्यं वद ।
ताम्बूलं कुसुमं पटीरमुदकं यद् बन्धुभिर्दीयते
स्यादत्रैव परत्र तत्किमु विषज्वालावलीदुःसहम् ॥८॥

—भानुकरस्यैतौ

२८१ प्रस्थानं वलयैः कृतं प्रियसखैरस्त्रैरजस्रं गतं
धृत्या न क्षणमासितं व्यवसितं चित्तेन गन्तुं पुरः ।
यातुं निश्चितचेतसि प्रियतमे सर्वे समं प्रस्थिता
गन्तव्ये सति जीवित प्रियसहृत्सार्थः किमुत्सृज्यते ॥९॥

२८२ यात्रामङ्गलसंविधानरचनाव्यग्रे सखीनां गणे
बाष्पाम्भःपि[7]हितेक्षणे गुरुजने तद्वत्सुहृन्मण्डले[8] ।
प्राणेशस्य मदीक्षणार्पितदृशः कृच्छ्रादतिक्रामतः
किं व्रीडाहतया मया भुजलतापाशो न कण्ठेऽर्पितः[9] ॥१०॥

—कस्याप्येतौ[10]

---

१. क ग मद् । २. क ग °धीनेऽपि पुरेव । ३. क °त्वाग्रहः । ४. ग चाटु° । ५. क एतदनन्तरं 'भानुकरस्य' इति लिखति । ६. ग प्रवत्स्यत्प° । ७. ग बाष्पान्तःपि° । ८. ख °मण्डलं । ९. ग °र्प्यते । १०. क ख कस्यापि ।

२८३ गच्छ गच्छसि चेत्कान्त[1] पन्थानः सन्तु ते शिवाः ।
मामपि जन्म तत्रैव भूयाद् यत्र गतो भवान् ॥११॥

—दण्डिनः

२८४ उद्यद्बर्हिषि दर्दुरारवमुषि प्रक्षीणपान्थायुषि
च्योतद्विप्रुषि चन्द्ररुङ्मुषि सखे हंसद्विषि प्रावृषि ।
मा मा मुञ्च कुचाग्रसन्ततपतद्बाष्पाकुलां बालिकां
काले कालकरालनीलजलदव्यालुप्तभास्वत्त्विषि ॥१२॥

— बाणस्य

## अथ प्रोषितप[2]तिका

२८५ लिखति न गणयति[3] रेखां निर्भरबाष्पाम्बुधौतगण्डतला[4] ।
अवधिदिवसावसानं मा भूदिति शङ्किता बाला ॥१३॥

—मोरिकायाः

२८६ समर्थ्य हृदि दारुणां मदनवेदनां भूयसी-
मनेन वनवर्त्मना प्रचलितः स मे वल्लभः ।
न वामदिशि शब्दितं किमिति वा त्वया वायस
त्वया सदनसारिके किमिति वा कृतं न क्षुतम् ॥१४॥

—भानुकरस्य

## अथोत्कण्ठिता

२८७ द्वारि स्तम्भविलग्ना प्रियसखि दृष्टिं पथि क्षिपसि ।
प्रहिणोषि भाग्यभाजि प्रेयसि दूतीमिव भ्रमरीम् ॥१५॥

—भानुकरस्य

२८८ अम्भोरुहाक्षि शम्भोश्चरणावाराधितौ केन ।
यस्मै[5] विचलित[6]वदना मदनाकूतं विभावयसि ॥१६॥

—गणपतेः

---

१. ग °त्पान्थ° । २. ग प्रोषितप° । ३. क लिखयति न गणति । ४. क °लता । ५. ग अस्मै । ६. ख विवलित° ।

अथाङ्गनावान्तरभेदाः । तत्र नवोढा

२८९ काञ्चीदाम निवेशयन् वितनुते वासः श्लथं सुभ्रुवो
हारं वक्षसि योजयन् करतलं धत्ते कुचाम्भोरुहे ।
जल्पंश्चाटुवचोऽधरं धयति यत्प्रेयान् कुतो विस्मयः
पांसुं चक्षुषि विक्षिपन् यदि धनं गृह्णाति पाटच्चरः ॥१७॥

—भानुकरस्य

२९० बलान्नीता पार्श्वे[1] मुखमभिमुखं नैव कुरुते
धुनाना मूर्द्धानं हरति बहुशश्चुम्बनविधिम्[2] ।
हृदि न्यस्तं हस्तं क्षिपति गमनारोपितमना[3]
नवोढा वोढारं रमयति[4] च सन्तापयति च ॥१८॥

—कस्यापि

२९१ विरम नाथ विमुञ्च ममाञ्चलं शमय दीपमिमं समया सखी ।
इति नवोढवधूवचनैर्युवा मुदमगादधिकां[5] सुरतादपि ॥१९॥

—रुद्रस्य

२९२ चुम्बनेषु परिवर्तिताधरं हस्तरोधि रसनाविघट्टने ।
विघ्नितेच्छमपि तस्य सर्वतो मन्मथेन्धनमभूद् वधूरतम् ॥२०॥

—कालिदासस्य

अथ विश्रब्धनवोढा

२९३ दत्तं करं वक्षसि मीलिताक्षी श्लथेन दूरीकुरुते करेण ।
आचुम्बिता नेति मुहुर्विधत्ते मुखं पुनः सम्मुखमेव धत्ते ॥२१॥

—गणपतेः

२९४ दीपाङ्कुरः स्फुरति पश्यति केलिकीरो
जाले[6] निवेशितमुखी च सखी चकास्ति ।

---

१. क ख ग पार्श्वं । २. ग °विधौ । ३. क गमनायैव यतते । ४. क सुखयति । ५. क ख °धिकं । ६. क जाटो (?) ।

इत्थं विचिन्त्य वचसा न शशाक बाला
नाथं निषेद्धुमनिषेद्धुमपि त्रपाभिः ॥२२॥

—भानुकरस्य

अथ मुग्धा

२६५ नीरात्तीरमुपागता श्रवणयोः सीम्नि स्फुरन्नेत्रयोः
श्रोत्रे लग्नमिदं किमुत्पलमिति ज्ञातुं करं न्यस्यति ।
शैवालाङ्कुरशङ्कया शशिमुखी रोमावलीं प्रोञ्छति
श्रान्ताऽस्मीति मुहुः सखीमविदितश्रोणीभरा पृच्छति ॥२३॥

अथ मध्या

२६६ स्वापे प्रियाननविलोकनहानिरेव
स्वापच्युतौ प्रियकरग्रहणप्रसङ्गः ।
इत्थं सरोरुहमुखी परिचिन्तयन्ती
निद्रां[1] विधातुमविधातुमपि[2] प्रपेदे ॥२४॥

—भानुकरस्यैतौ[3]

अथ प्रौढा

२६७ मदानने चुम्बनचञ्चलस्य प्रियस्य संस्पृष्टकुचस्थलस्य ।
नीवीषु भावी करसन्निवेशस्तद् वामनी यामिनि मैव[4] भूयाः ॥२५॥

—लक्ष्मणस्य

अथासती

२६८ अयं रेवाकुञ्जः कुसुमशरसेवासमुचितः
समीरोऽयं वेलावनविदलदेलापरिमलः ।
इयं प्रावृड् धन्या नवजलदविन्यासचतुरा
स्मरा[5]धीनं चेतः सखि किमपि कर्त्तुं मृगयते ॥२६॥

१. ग स्वापं । २. क ग °मपि हातुमपि । ३. क एतौ भानुकरस्य । ४. क नैव ।
५. ख स्मरा° इति लिखित्वा परा° इति संशोधितम् ।

## अथ विदग्धाऽसती

२९९ देहे दुर्ललितस्य देवरशिशोः स्फोटव्रणो दारुणो
मातस्तेन वनस्पतित्वचमुपाहर्तुं मया गम्यते ।
दृप्यन्तु श्वसितानि घर्मसलिलैः पत्राणि लुप्यन्तु वा
वक्षो वा विलिखन्तु हन्त नखरैः क्रुद्धाः कपिश्रेणयः ॥२७॥

—भानुकरस्यैतौ[1]

३०० प्रियो मयैवावचितैः प्रसूनैर्दृष्टो हरस्यातनुते सपर्याम् ।
अतो नतानेकलतावृतानि यास्यामि सायं विपिनानि सख्यः ॥२८॥

—कस्यापि

## अथ गुप्ताऽसती

३०१ श्वश्रूः क्रुध्यतु निर्दिशन्तु सुहृदो निन्दन्तु वा यातर-
स्तस्मिन् किन्तु न मन्दिरे सखि पुनः स्वापो विधेयो मया ।
आखोराक्रमणाय कोणकुहरादुत्फालमातन्वती
मार्जारी नखरैः खरैः कृतवती कां कां न मे दुर्दशाम् ॥२९॥

## अथ लक्षिताऽसती

३०२ कोकः स्तोकविमुक्तमौक्तिकभरो निस्पन्दमिन्दीवरं
चापं चापलवर्जितं हिमकरक्रोडे तमः क्रीडति ।
वातः कातरयत्यपाकृतरसं बन्धूकमेतावती
वार्ता क्वापि कदापि पाणिपिहिता कस्यापि वा तिष्ठति ॥३०॥

## अथ वेश्या

३०३ केशः कुन्दमिषादिवोपहसति द्रव्यैर्विहीनान् जनान्
यूनां ग्रन्थिधनं विलोकितुमिवोद्ग्रीवः[2] स्तनस्तिष्ठति ।
प्रेमच्छेदकृपाणवल्लिसुषमां रोमालिरालम्बते
यस्याः सा कथमस्तु चेतसि चमत्काराय वाराङ्गना ॥३१॥

---

१. क एतौ भानुकरस्य, ख भानुकरस्य । २. ग °दग्रीवं ।

## अथ कुलटा

३०४ एते वारिकणान् किरन्ति पुरुपान् वर्षन्ति नाम्भोधराः
शैलाः शाद्वलमुद्वमन्ति न वमन्त्येते पुनर्नायकान् ।
त्रैलोक्ये तरवः फलानि सुवते नैवारभन्ते जनान्
धातः कातरमालपामि कुलटाहेतोस्त्वया किं कृतम् ॥३२॥

३०५ शिरसि शिरसिजं दृशोर्निमेषं विटपिनि पल्लवमालये तृणं वा ।
गणयितुमपि पारयन्ति केचित् प्रियसखि के कथयन्तु जारसंख्याम् ॥३३॥

३०६ दिवसे घटिकास्त्रिंशत्[1] त्रिंशद् घटिकाः परं रजनौ ।
लक्षं[2] नगरयुवानस्तात विधातः किमाचरितम् ॥३४॥

३०७ स्थानं नास्ति क्षणं नास्ति वक्तारमिति सुभ्रुवः ।
जहास हारकूटेन पयोधरमहीधरः ॥३५॥

—भानुकरस्यैतौ[3]

३०८ दुर्दिवसे घनतिमिरे दुःसञ्चारासु नगरवीथीषु ।
पत्युर्विदेशगमने[4] परमसुखं जघनचपलायाः ॥३६॥

—जघनचपलायाः[5]

## अथ कुलटोपदेशः

३०९ वयं बाल्ये बालांस्तरुणिमनि यूनः परिणता-
वपीच्छामो वृद्धान् परिणयविधीनां स्थितिरिति ।
त्वयारब्धं जन्म क्षपयितुमनेनैकपतिना
न मे गोत्रे पुत्रि क्वचिदपि सतीलाञ्छनमभूत् ॥३७॥

—कस्यापि

३१० नारीणां खलु बन्धुरन्धतमसं पाथोधरः सोदरः
कुञ्जं नाभिगृहं निशा सहचरी सेव्यः स्मरः क्ष्मापतिः ।
इत्थं चारुचकोरचञ्चलदृशां यासां मतिर्जायते
तासामेव यशः सुधांशुधवलं तासां गृहे वृद्धयः ॥३८॥

---

१. ग °त्रिशे । २. क पक्षं । ३. क ख एते भानुकरस्य । ४. क ख ग °समये । ५. ग 'जघनचपलायाः' इति नास्ति ।

३११ चेत्पौरादपि शङ्कसे हिमरुचेरप्यर्चिषो लज्जसे
भोगीन्द्रादपि चेद् विभेषि तिमिरस्तोमादपि त्रस्यसि ।
चेत्कुञ्जादपि दूयसे जलधरध्वानादपि क्षुभ्यसि
प्रायः पुत्रि हतास्मि हन्त भविता त्वत्तः कलङ्कः कुले ॥३९॥

—भानुकरस्यैतौ

३१२ सुखशय्या ताम्बूलं विश्रब्धाश्लेषचुम्बनादीनि ।
तुलयन्ति न लक्षांशं त्वरितक्षणचौर्यसुरतस्य ॥४०॥

—कस्यापि

३१३ एकानपाङ्गैरपरांस्तरङ्गैर्भ्रु[1]वोर्विलासैरितरं च हासैः ।
विमोहयन्त्यन्यमहो रहोभिः को वा कलां वेद कलावतीनाम् ॥४१॥

—लक्ष्मणस्य

इति श्रीआङ्कोलकरलक्ष्मणभट्टकृतायां[2] पद्यरचनायां सप्तमो व्यापारः ।

• • •

---

१. क °रपरं तरङ्गैर्भ्रुवां, ख ग °रपरं तर° । २. क ख ग °भट्टकृतौ ।

## अष्टमो व्यापारः

### अथ सौन्दर्यगर्विता

३१४ भामिन्यो विदधतु[1] भागधेयभाजः केयूरं स्रजमवतंसमम्बुजातैः ।
धिग्दैवं मम तु विभूषणं विदूरे रोलम्बादधरनिवारणं पुमर्थः ॥१॥

—कस्यापि

### अथ प्रेमगर्विता

३१५ वपुषि तव तनोति रत्नभूषां
प्रभुरिति धन्यतमाऽसि किं ब्रवीमि ।
सखि तनुनयनान्तरालभीरुः
कलयति मे न विभूषणानि कान्तः ॥२॥

—भानुकरस्य

### अथ खण्डिता

३१६ वक्षोजखण्डित[2]मुरो दयितस्य वीक्ष्य
दीर्घं न निःश्वसिति जल्पति नैव किञ्चित् ।
प्रातर्जलेन वदनं परिमार्जयन्ती
बाला विलोचनजलानि तिरोदधाति ॥३॥

### अथ कलहान्तरिता

३१७ चलं चेतः पुंसां सहजसरलाः पङ्कजदृशो
भवत्येव क्रोधः क्वचिदपि कदाचित्तरुणयोः ।
दहेदङ्गं भृङ्गी विधुरपि विदध्यात्परिभवं
स्मरो मां[3] मथ्नीयादिति किमपि नाज्ञासिषमहम् ॥४॥

---

१. क विदधित, ख ग विदधत । २. क ख °जचिह्नित° । ३. ग मा ।

३१८ अकरोः किमु नेत्रशोणिमानं किमकार्षीः करपद्मतर्जनं वा ।
कलहं किमधाः क्रुधा रसज्ञे हितमर्थं न विदन्ति दैवदष्टाः[१] ॥५॥

३१९ विरमति कथनं विना न खेदः सति कथने समुपैति कापि लज्जा ।
इति कलहमधोमुखी सखीभ्यो लपितुमनालपितुं समाचकांक्ष ॥६॥

—भानुकरस्यैते[२]

## अथ दूती

३२० माला बालाम्बुजदलमयी मौक्तिकी हारयष्टिः
काञ्ची किञ्च त्वयि यदुपते प्रस्थिते प्रस्थितैव ।
ब्रूमस्तस्याः किमिह धमनी वर्तते वा न वेति
ज्ञातुं बाहोरहह वलयं पाणिमूलं प्रयाति ॥७॥

—भानुकरस्य

३२१ न नीतमुपनासिकं परिमलव्ययाशङ्कया
न हन्त विनिवेशितं विरहवह्निकुण्डे हृदि ।
दृशोर्बहिरिति श्रुतौ न निहितं प्रियप्रेषितं
करे कमलमर्पितं मृगदृशा दृशा पीयते ॥८॥

—अविलम्बस्य[३]

३२२ मुहुर्व्यजनवीजनैर्बहलचन्दनासेचनैः
सरोजदलवेष्टनै[४]रपि न चेष्टते सुन्दरी ।
परन्तु तव नामनि प्रियसखीभिरावेदिते
निवेदयति जीवितं श्रवणसीम्नि रोमोद्गमः ॥९॥

—बाबूमिश्रस्य[५]

## अथ दूत्युपहासः

३२३ किं त्वं निगूहसे दूति स्तनौ वक्त्रञ्च पाणिना ।
खण्डिता एव शोभन्ते शूराधरपयोधराः ॥१०॥

—कस्यापि

---

१. क ख ग °दृष्टाः । २. ग °स्यैतौ । ३. क अथ लम्बस्य । ४. ख °लसङ्गमै° ।
५. ख कस्यापि ।

३२४ निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो
नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः ।
मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमे
वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम् ॥११॥

—अमरुकस्य

३२५ त्वं दूति निरगाः कुञ्जं न तु पापीयसो गृहम् ।
किंशुकाभरणं देहे दृश्यते कथमन्यथा ॥१२॥

—भानुकरस्य

## अथ मानिनीमानः

३२६ कोपो यत्र भ्रुकुटि[1]रचना विग्रहो यत्र मौनं
यत्रान्योन्यस्मितमनुनयो दृष्टिपातः प्रसादः ।
तस्य प्रेम्णस्तदिदमधुना वैशसं पश्य जातं
त्वं पादान्ते लुठसि न च मे मन्युमोक्षः खलायाः ॥१३॥

—वामनस्य

३२७ यदाभूदस्माकं प्रथममविभक्ता तनुरियं
ततो नु त्वं प्रेयानहमिति[2] हताशा प्रियतमा ।
इदानीं नाथस्त्वं वयमपि कलत्रं किमपरं
मयाप्तं प्राणानां कुलिशकठिनानां फलमिदम् ॥१४॥

—अमरुकस्य

## अथ मानापनोदः

३२८ त्रियामायामस्यां सुतनु यमुनायामिव तर-
त्तरङ्गप्रोदञ्चद्विमलदलरक्तोत्पलमिव ।
इयं दृष्टिः शोणा मयि निहितकोणा विजयते
त्यज क्रोधं राधे मयि निरपराधे कुरु कृपाम् ॥१५॥

—लक्ष्मणस्य

---

१. ग भृकुटि° । २. ख °मपि ।

अथ परस्परप्रीति[1]प्रलापः । तत्रादौ नायिकायाः

३२९ सहस्रनेत्रैः प्रियगात्रशोभां विभावनीयां तु निभालयन्त्याः ।
किं लोचनाम्भोरुहयुग्मपत्रं[2] विधाय धातः परिवञ्चितास्मि ॥१६॥

—लक्ष्मणस्य[3]

अथ नायकस्य

३३० त्वदीयमुखपङ्कजं यदि विधोरलं वार्तया
तवाधरसुधा यदा भवति किं सुधा नो मुधा ।
त्वदङ्गपरिरम्भणं भण कृतं सुधागाहनै-
स्त्वदीयदृगनुग्रहस्तदपि धिग् धिगैन्द्रं पदम्[4] ॥१७॥

३३१ [5]दृश्यं चेन्मुखपङ्कजं तव यदि श्राव्यं तव व्याहृतं
घ्रेयं चेन्मुखसौरभं तव यदि स्वाद्यं तवौष्ठामृतम् ।
स्पृश्यं चेत्कुचयोर्युगं तव परं ध्येयं सुरूपं तव
त्वं सर्वेन्द्रियवागुरेव[6] विषयः कस्येन्द्रियस्यासि[7] न ॥१८॥

—लक्ष्मणस्यैते[8]

अथ रतप्रशंसा

३३२ नरैर्विफलजन्मभिर्गिरिदरी न किं सेव्यते
न चेच्छ्र[9]वणगोचरीभवति जातुचिज्ज[10]न्मनि ।
कपोतरवमाधुरीविरचनानुकारा[11] दरी
रतासहकृशोदरीवचनरीतिकाकुध्वनिः ॥१९॥

—लक्ष्मणस्य

अथ रतारम्भः

३३३ हस्तस्वेदस्नपित इव यश्चन्दनक्षोदवृन्दै-
रालिप्तोऽलङ्कृतपरिसरः फुल्लकल्हारहारैः ।

---

१. क ख ग °स्परं प्रीति । २. क ख ग °मात्रं । ३. क 'लक्ष्मणस्य' इति नास्ति । ४ ख एतदनन्तरं 'एतौ लक्ष्मणस्य' इति लिखितम् । ५. ख पद्यमिदं नास्ति । ६. क ग °रैव । ७. ग °स्यापि । ८. क एतौ लक्ष्मणस्य । ९. क ख यच्छ्र° । १०. ग जातु यज्ज° । ११. ग °कारी ।

आराधीत्थं तव नवकुरङ्गाक्षि वक्षोजशम्भुः
साक्षात्कारं तदपि न दिशत्येष किं वा करोमि ॥२०॥

३३४ कान्ते नितान्तं दयिताकुचान्तचोलाञ्चलं कर्षति हर्षलुब्धे ।
बभार बाला नमितास्यहास्यलेशापदेशादपरं निचोलम् ॥२१॥

—लक्ष्मणस्यैतौ[1]

३३५ उरोरुहाम्भोरुहदर्शनाय विमुञ्चतः कञ्चुकबन्धनानि ।
आनन्दनीराकुललोचनस्य प्रियस्य जातो विफलः प्रयासः ॥२२॥

३३६ कान्ते कलितचोलान्ते दीपे वैरिणि दीप्यति ।
आसीदसितपद्माक्ष्याः पक्ष्मो नयनमुद्रणम् ॥२३॥

—भानुकरस्यैतौ[2]

३३७ दृशा सपदि मीलितं दशनरोचिषा निर्गतं
करेण परिवेपितं वलयकैरथाक्रन्दितम् ।
प्रियेण हरिणीदृशो दशनखण्ड्यमानेऽधरे
परव्यसनकातराः किमिव कुर्वतां साधवः ॥२४॥

—कस्यापि

## अथ रतम्

३३८ आकाशे नटनं सरोरुहयुगे मञ्जीरमञ्जुध्वनिः
शीतांशौ कलकूजितं किसलये पीयूषपानोत्सवः ।
स्वर्णक्षोणिधरे नखातपरिभवो ध्वान्ते कराकर्षणं
रम्भायां[3] रसनारवस्तरुणयोः पुण्यानि मन्यामहे ॥२५॥

३३९ हारस्त्रुट्यति कङ्कणं निपतति स्रक्कौमुदी क्लिश्यति
ध्वान्तं धावति सीत्करोति रजनीजानिर्वली भज्यति ।
काञ्ची क्षुभ्यति काञ्चनक्षितिधरे किञ्च क्षतं चञ्चति[4]
प्रारम्भे मदनाहवस्य विजयी देवो मनोभूरभूत् ॥२६॥

—भानुकरस्यैते

---

१. क एतौ लक्ष्मणस्य । २. क ख एतौ भानुकरस्य । ३. क रम्भाया । ४. क क्षि(क्ष)तं न्यच[ति], ख न्यञ्चति ।

३४० संन्यासमाप काञ्ची जहौ दुकूलं कलत्रमवलायाः ।
विससर्ज रागमधरो मुक्तिमुरीचक्रिरे चिकुराः ॥२७॥

—कस्यापि

३४१ नैषा वेगं मृदुतरतनुस्तावकीनं विसोढुं
शक्ता नैनां चपल नितरां खेदयेन्दीवराक्षीम् ।
रत्यभ्यासं विदधत इति प्राणनाथस्य गत्वा
कर्णोपान्ते निभृतनिभृतं नूपुरं शंसतीव ॥२८॥

—धूर्तस्य

३४२ रतिरभसनितान्तश्रान्तकान्ताकुचान्त-
श्चलदमलकराग्रा नाभिदेशेष्वधो वा ।
स्मितमधुरमुखीनां[1] ह्रीणनेत्रोत्पलाना-
मधरमधु वधूनां भाग्यवन्तः पिबन्ति ॥२९॥

—शार्ङ्गधरस्य[2]

३४३ मज्जन्त्या रससिन्धौ किं किं न कृतं तया सुदृशा ।
विधूताः प्रियस्य केशाः कण्ठे लग्नं भुजे वलितम् ॥३०॥

—वाणीविलासस्य

३४४ पत्युः प्रवृत्तस्य रतौ जिगीषावचो निशम्यापि न किञ्चिदूचे ।
कलावती किन्तु विहस्य तस्य कपोलयोः स्वेदमपाचकार ॥३१॥

—रामचन्द्रस्य

## अथ विपरीतम्

३४५ प्रशान्ते नूपुरारावे श्रूयते मेखलाध्वनिः ।
कान्ते नूनं रतश्रान्ते कामिनी पुरुषायते ॥३२॥

—कस्यापि

३४६ विहायसि विहारिणी भवतु नाम सौदामिनी
सुमेरुशिखरादधः पततु नाम मन्दाकिनी ।

१. क स्मिरति(?)मुखमुखीनां । २. ख °धारस्य ।

इदं तु महददद्भुतं यदयमेत्य भूमीतलं
नमन्नमृतदीधितिः कमलसारमाकर्षति ॥३३॥

—कस्यापि[1]

३४७ मधुपानसमुल्लसत्पताकं[2] चलहेमाचलकान्तिभिर्जटालम् ।
विधुनिष्पतदन्धकारजालं शुभकालं न[3] पुनर्विलोकयामः ॥३४॥

३४८ साक्षादभूत्स्वयम्भूरथ मुक्तास्तिमिरनिकरभराः[4] ।
प्रणनाम शीतरोचिः स्तवपाठं मेखला विदधे ॥३५॥

—भानुकरस्यैतौ

३४९ पपात मेरोः सुरसिन्धुधारा ववर्ष तारागणमन्धकारः ।
वभूव भृङ्गावलिरप्यकम्पा शशाम शम्पालतिकाविलासः ॥३६॥

—कवीन्द्रस्य[5]

३५० वलत्कुचं व्याकुलकेशपाशं स्विद्यन्मुखं स्वीकृतमन्दहासम् ।
पुण्यातिरेकात् पुरुषा लभन्ते पुम्भावमम्भोरुहलोचनानाम् ॥३७॥

—कस्यापि

३५१ पपात गङ्गा हरमौलिसङ्गादन्धं तमो जातमपेतवन्धम् ।
तडिल्लता चञ्चलतामहासीदस्पन्दमासीदरविन्दयुग्मम् ॥३८॥

—रामचन्द्रस्य

## अथ रतावसानम्

३५२ मत्तेभकुम्भपरिणाहिनि कुङ्कुमार्द्रे
कान्तापयोधरयुगे रतिखेदखिन्नः ।
वक्षो निधाय भुजपञ्जरमध्यवर्ती
धन्यः क्षपां क्षपयति क्षणलब्धनिद्रः ॥३९॥

—भर्तृहरेः[6]

---

१. क कस्याप्येतौ । २. क °ल्लसत्प्रवालं । ३. क ख क्व । ४. क ख °करसम्भाराः ।
५. कस्यापि । ६. क °हरस्य ।

३५३ शान्ते मन्मथसङ्गरे रणभृतां[1] सत्कारमातन्वती
वासोऽदाज्जघनस्य पीनकुचयोर्हारं श्रुतेः कुण्डलम् ।
बिम्बोष्ठस्य च वीटिकां सुनयना पद्भ्यां रणन्नूपुरौ
पृष्ठालम्बिनि केशपाशनिचये युक्तोऽभिबन्धक्रमः ॥४०॥

—कस्यापि

३५४ कामसङ्गरविधौ मृगीदृशः प्रौढपौरुषधरे पयोधरे ।
स्वेदराजिरुदियाय सर्वतः पुष्पवृष्टिरिव पुष्पधन्वनः ॥४१॥

## अथ रताशंसनम्

३५५ उक्तं यत्कृपणं वचो विरचितो भूयान् वसूनां व्ययः
सोढाः किञ्च वियोगवज्रततयो दूती मुहुः प्रेषिता ।
बद्धोऽयं प्रणयाञ्जलिर्विनिहिते बाष्पाम्बुधौते[2] दृशौ
निष्पीयाधरपल्लवं मृगदृशः सर्वं सखे विस्मृतम् ॥४२॥

—भानुकरस्यैतौ

## अथ रतनिद्रा

३५६ मिश्रितोरु मिलिताधरं मिथः स्वप्नवीक्षितपरस्परक्रियम् ।
तौ ततोऽनु परिरम्भसम्पुटे पीडनां विदधतौ विनिद्रतुः ॥४३॥

—श्रीहर्षस्य

इति श्रीआङ्कोलकरलक्ष्मणभट्टविरचितायां[3] पद्यरचनायामष्टमो व्यापारः ।

• • •

१. क ख °कृतां । २. ख यद्बाष्पधौते । ३. क ख °भट्टकृतौ ।

## नवमो व्यापारः

### अथ प्रभातानुनयः

३५७ गतप्राया रात्रिः शशिमुखि शशी शीर्यत इव
प्रदीपोऽयं निद्रावशमुपगतो घूर्णत इव ।
प्रणामान्तो मानस्तदपि न जहासि क्रुधमहो
कुचप्रत्यासत्त्या हृदयमपि ते चण्डि कठिनम् ॥१॥

३५८ क्षीणांशुः शशलाञ्छनः शशिमुखि क्षीणो न कोपस्तव
स्मेरं पद्मवनं मनागपि न ते स्मेरं मुखाम्भोरुहम् ।
पीतं श्रोत्रपुटेन षट्पदरुतं पीतं न ते जल्पितं
रक्ता पूर्वदिगङ्गना रविकरैर्नाद्यापि रक्तासि किम् ॥२॥

—कस्याप्येतौ[1]

### अथ वायुः[2]

३५९ उत्सार्य कुन्तलमपास्य दुकूलमूल-
मुन्नाम्य बाहुलतिकामलसास्तरुण्यः ।
स्वेदाम्बुसिक्ततनवः स्पृहयन्ति यस्मै
तस्मै नमः सुकृतिने मलयानिलाय ॥३॥

३६० वासो विधूय स्तनयोरमुष्याः
कपोलकीर्णां कवरीमुदस्य ।

---

१. *क ख* कयोरपि । एतदनन्तरमेव *ख* प्रतौ पद्यमिदमस्ति—

परिस्फुरन्मानविहारकाले नालोकि बाले तव लोचनश्रीः ।
अतोऽनुतापादिव किन्तु कान्ते दीपो निशान्ते मलिनत्वमेति ॥

—पुरुषोत्तमस्य

२. *ख* प्रभातवायुः ।

अवारितः प्रोञ्छति[1] वारिधारां
मुखे मृगाक्ष्याः सुकृती समीरः ॥४॥

३६१ झञ्झानिलोऽपि सुरतान्तनितान्ततान्त-
कान्ताकुचान्तघनघर्ममपाकरोति ।
भूयोऽभिलाषजननी पुनरन्यथैव
स्वेदापनोदनकला मलयानिलस्य ॥५॥

३६२ भिक्षितकमलकुटुम्बाः शिक्षितगजगामिनीगतयः ।
लक्षितहिमगिरिपादाः प्रातरमी मातरिश्वानः ॥६॥

३६३ लतां पुष्पवतीं स्पृष्ट्वा स्नातो विमलवारिणा ।
पुनः सम्पर्कशङ्कीव[2] मन्दं चरति मारुतः ॥७॥

३६४ लवङ्गलतिकाभङ्गदयालुर्दक्षिणानिलः ।
कथमुन्मूलयत्येष मानिनीमानपर्वतान् ॥८॥

—केषामप्येते

३६५ चोलाङ्गनाकुचनिचोलतलानुलीनो
द्राक्केरलीतरलकुन्तलकम्पनोत्कः ।
लाटीललाटतटशोषणमा[3]नसोऽयं
फुल्लारविन्दवन[4]बन्धुरुपैति वायुः ॥९॥

—लक्ष्मणस्य

## अथ प्रभातम्

३६६ विरलविरलीभूतास्ताराः कलौ सुजना इव
व्यपसरति च ध्वान्तं चित्तात् सतामिव दुर्जनः ।
मन इव मुनेः सर्वत्रापि प्रसन्नमभून्नभो
विगलति निशा क्षिप्रं लक्ष्मीरनुद्यमिनामिव ॥१०॥

३६७ अभूत्प्राची पिङ्गा रसपतिरिव प्राश्य कनकं
गतच्छायश्चन्द्रो बुधजन इव ग्राम्यसदसि ।

---

१. ग °रितो गच्छति । २. क °शङ्की च । ३. क ख ग °तटलम्पटमा° । ४. क मन्वा-
रविन्दघ (?) व° ।

क्षणं क्षीणास्तारा नृपतय इवानुद्यमपरा
न दीपा राजन्ते द्रविणरहितानामिव गुणाः ॥११॥

—भोज[1]प्रबन्धात्

३६८ अयमुदयमहीभृन्मूर्ध्नि पाणिं गृहीत्वा[2]
दिवसपतिरहौर्षीदिन्दुपादान् हवींषि ।
अरुणकिरणवह्नौ कन्यका पौरुहूती
हरिदपि किमकार्षीत्तारकालाजहोमम् ॥१२॥

३६९ सन्निगृह्य चिकुरं तमोमयं यामिनी तदनु केलिविच्युतम् ।
कुर्वती श्रवसि चन्द्रमण्डलं कुण्डलं गगनकुक्षमुज्झति ॥१३॥

—भानुकरस्यैतौ

३७० कोकानुद्ग्रीवयन्तः पथि पथि कुलटामानसं कम्पयन्तः
प्रस्थातारं विभाते[3] प्रियतममबलां गाढमालिङ्गयन्त्यः ।
उत्थातुं चाङ्गभङ्गीः कुलकमलदृशां कारयन्तो निशान्ते
कूंकाराः[4] कुक्कुटानां मधुमधुरसमारम्भगम्भीरधीराः ॥१४॥

३७१ वृन्देन तारावलितन्दु[5]लानामङ्केन च श्रीफलपल्लवेन ।
अभ्यर्च्य जागेश्वरमिन्दुबिम्बं विसर्जयत्येष नभोमुनीन्द्रः ॥१५॥

—एतौ गण[6]पतेः

३७२ अनुनयमगृहीत्वा व्याजसुप्ता पराची
रुतमथ कृकवाकोस्तारमाकर्ण्य कल्ये[7] ।
कथमपि परिवृत्ता निद्रयाऽन्धा किल स्त्री
मुकुलितनयनैवाश्लिष्यति[8] प्राणनाथम् ॥१६॥

—माघस्य[9]

३७३ वियोगार्तिमलिन्याः[10] किं नलिन्या नलिनीधवः ।
करैर्निःसारयाञ्चक्रे दुःखशल्यमलिच्छलात् ॥१७॥

—लक्ष्मणस्य

---

१. क एतौ भोज° । २. क ख ग पाणिग्रहीता । ३. क प्रभाते । ४. ग कूक्काराः । ५. ग °तण्डु° । ६. ख भानुकरपितुर्गण° । ७. क ख कल्पे । ८. ग °नैव श्लि° । ९. क ख माघकवेः । १०. ग °लिन्या ।

**अथ मध्याह्नः**

३७४ दुःसहसन्तापभयात् सम्प्रति मध्यस्थिते दिवसनाथे ।
छायामिव वाञ्छन्ती छायापि गता तरुतलानि ॥१८॥

—अवन्तिवर्मणः

३७५ मध्याह्ने नमीयुषि रवौ बत पादपस्य
छायाभितापभयतो भजते द्रुमूलम्[1] ।
संदृश्य तेन किमपायि कलिन्दकन्या-
तोयभ्रमेण तरुणैव तृषातुरेण ॥१९॥[2]

३७६ मध्याह्ने नूनमापोऽपि तिग्मतापोपशान्तये ।
दधुः कमलिनीपत्रमातपत्रमिवोपरि ॥२०॥[3]

—रामचन्द्रस्यैतौ

३७७ अस्वाध्यायः पिकानां मदनमखसमारम्भणस्याधिमासो
निद्राया जन्ममग्नं किमपि मधुलिहां कोऽपि दुर्भिक्षकालः ।
विष्टिर्या[4]त्रोत्सुकानां मलयजमरुतां पान्थकान्ताकृतान्तः
प्रालेयोन्मूलमूलं समजनि समयः कश्चिदौत्पातिकोऽयम् ॥२१॥

—वाहिनीपतेः[5]

३७८ वहद्वहलमारुतप्रसरदग्निखण्डैरिव
स्फुरद्द्युमणिमण्डलद्युतिवितानकैस्तापिता ।
विसारि वपुरात्मनः सपदि वासरश्रीरियं
चलन्मरुमरीचिकानिचय[6]पल्लवेनाञ्चति ॥२२॥

३७९ भानोः पादैर्दहनपरुषैर्दह्यमानान्तराणा-
मुत्क्रामन्तः किल विटपिनां प्राणपिण्डा इवामी ।
गाढोदन्याकुलितमनसो भिन्नचञ्चूपुटान्ताः
कोकूयन्ते विहगशिशवः कोटराणां मुखेषु ॥२३॥

—एतौ गणपतेः

---

१. ग °तेऽङ्घ्रि° । २. क ख एतदनन्तरं 'रामचन्द्रस्य' इति लिखितम् । ३. क ख पद्यमिदं नास्ति । ४. क चिष्टिर्या° । ५. 'वाहिनीपतेः' इति नास्ति । ६. क ख ग °सिचय° ।

## अथ जलक्रीडा

३८० अंसेन कर्णं चिबुकेन वक्षः करद्वयेनाक्षि तिरोदधानः[1] ।
सन्ताडयामास हरिः समेताश्च[2] कोरनेत्राश्चुलुकोदकेन ॥२४॥

३८१ परस्पराश्लेषवशं गतानि द्वन्द्वानि चक्रस्य विहस्य काचित् ।
सन्ताड्य पद्मैः स्खलदंशुकान्ता कृष्णाय कान्ता कथयाम्बभूव ॥२५॥

३८२ ह्रिया सखीनां हरिणाम्बुजाक्षीं गिरा परावर्तयितुं न सेहे ।
अनङ्गलेखाक्षरसङ्गतेन सन्ताडयामास सरोरुहेण ॥२६॥[3]

—गणपतेरेतौ[4]

३८३ आत्तमात्तमधिकान्तमुक्षितुं कातरा शफरशङ्किनी जहौ ।
अञ्जलौ जलमधीरलोचना लोचनप्रतिशरीरलाञ्छितम् ॥२७॥

—कलशस्य

३८४ अविरतमिदमम्भः स्वेच्छयोच्छालयन्त्या
कमलमुकुलकान्तोत्तानहस्तद्वयेन ।
परिकलित इवार्घः कामबाणातिथिभ्यः
सलिलमिव वितीर्णं बाललीलासुखाय ॥२८॥

—कस्यापि[5]

## अथ वनक्रीडा

३८५ पतितैः शिरीषरजसां[6] निकरैः कलुषीकृतं नयननीररुहम् ।
हरिणा हिरण्यरमणीयतनोर्मुखमारुतैः किमपि शीतलितम् ॥२९॥

---

१. ख °दधानाः । २. ख समेत्य च° । ३. क ख ग एतदनन्तरं पद्यमिदमस्ति—
निरीक्ष्य वेणीप्रतिबिम्बमेणीदृशो भुजङ्गभ्रममावहन्त्यः ।
पतद्दुकूलं धुतबाहुमूलं कूलं प्रकम्पाकुलिताः प्रचेलुः ॥
ख —एते भानुकरस्य

४. क ख 'गणपतेरेतौ' इति नास्ति, ग °रेते । ५. क 'कस्यापि' इति नास्ति । ६. ख °जसो ।

३८६ अवलाकृतिं समुपकल्प्य शनैर्व्रजता लतापरिसरे मिलिता ।
कपटेन कैटभजिता हसता वनिता धृता करसरोरुहयोः ॥३०॥

—भानुकरस्यैतौ[1]

३८७ असंख्यपुष्पोऽपि मनोभवस्य पञ्चैव वाणार्थमयं ददाति ।
एवं कदर्यत्वमिवावधार्य सर्वस्वमग्राहि मधोर्वधूभिः ॥३१॥

—विल्हणस्य

३८८ पाणौ पद्मधिया मधूककुसुमभ्रान्त्या तथा गण्डयो-
र्नीलेन्दीवरशङ्कया नयनयोर्बन्धूकबुद्ध्याऽधरे ।
लीयन्ते कवरीभरे निजकुले व्या[2]मोहजातस्पृहा
दुर्वारा मधुपाः कियन्ति तरुणि स्थानानि रक्षिष्यसि ॥३२॥

—अचलस्य

३८९ रम्भोरु देहपरिरम्भभरैस्त्वदीयै-
र्यन्मानसं[3] विकृतिमेति न चित्रमेतत् ।
त्वत्पादपद्मलवसङ्गवशादशोको
रोमाञ्चमञ्चति दलत्कलिकाच्छलेन[4] ॥३३॥

—लक्ष्मणस्य

## अथ भ्रमरीनृत्यक्रीडा

३९० भ्रमात्प्रकीर्णे भ्रमरीषु किञ्चिच्चेला[5]ञ्चले चञ्चललोचनानाम् ।
कुचौ कदाचिज्जघनं युवानो विलोक्य साफल्यमवापुरक्ष्णाम् ॥३४॥

३९१ परिभ्रमन्त्या भ्रमरीविनोदे नितम्बविम्बाद् विगलद्दुकूलम् ।
विलोक्य कस्याश्चन कोमलाङ्ग्याः पुम्भावमन्याः सुदृशो ववाञ्छुः ॥३५॥

—गुणाकरस्यैतौ

३९२ चेलाञ्चलेन चलहारलताप्रकाण्डैर्वेणीगुणेन च चलद्वलयीकृतेन[6] ।
हेलाहितभ्रमरकभ्रममण्डलीभिश्छत्त्रत्रयं रचयतीव चिरं नतभ्रूः ॥३६॥

—कस्यापि

---

१. ख एतौ भानुकरस्य । २. क °कुलव्या° । ३. क ख ग °र्यच्चेतनो । ४. क °बलेन । ५. ग °खेला° । ६. क वेणीगुणानरभसाद्वलकोमलाङ्ग्याः, ख रभसाद्वल°, ग °वाणी-गुणेन रभसाद् ।

३९३ मुक्ते काञ्चनकुड्मले निपतिते माणिक्यभूषामणौ
कीर्णे केलिसरोरुहे विगलिते मुक्ताकलापे सति ।
निःश्वस्याम्बुजलोचना भ्रमरिकानृत्यावसाने पुनः
प्राणेशच्युतिशङ्कयेव हृदये[1] हस्तारविन्दं ददौ ॥३७॥

३९४ अलक्षितकुचाभोगं भ्रमन्ती नृत्यभूमिषु ।
स्मरेणापि सरोजाक्षी न लक्ष्यीक्रि[2]यते शरैः ॥३८॥

—एतौ भानुकरस्य

## अथ कन्दुक[3]क्रीडा

३९५ सानन्दकन्दुकविहारविधौ वधूनां
दोलायमानमणिकङ्कणनिक्वणेन ।
उड्डायितेषु[4] युवचित्तविहङ्गमेषु
श्येना[5] इव स्मृतिभुवो विशिखा विलग्नाः ॥३९॥

३९६ भ्रमच्चरणपल्लवक्वणदमन्दमञ्जीरकं
परिस्खलदुरोरुहस्तवककम्पमानांशुकम् ।
रणत्कनकमेखलं करसरोरुहाभ्यां पुरः
पतन्तमपराददे कुसुमकन्दुकं सुन्दरी ॥४०॥

—एतौ गणपतेः

३९७ पयोधराकारधरो हि कन्दुकः करेण रोषादिव ताड्यते मुहुः ।
इतीव नेत्राकृति भीतमुत्पलं तस्याः प्रसादाय पपात पादयोः ॥४१॥

—कालिदासस्य

## अथ दृङ्मीलनक्रीडा

३९८ नैतस्याः प्रसृतिद्वयेन सरले शक्ये पिधातुं दृशौ
सर्वत्रैव विलोक्यते मुखशशिज्योत्स्नावितानैरियम् ।

---

१. क 'हृदये' इति नास्ति । २. क ख ग लक्षीक्रि° । ३. क 'कन्दुके'ति नास्ति ।
४. क ख उच्चाटितेषु । ५. क शेना ।

इत्थं बालतया सखीभिरसकृद् दृङ्मीलनाकेलिषु
व्या(षि)द्धा रजनीमुखे च[1] नयने स्वे गर्हते कन्यका ॥४२॥

—कस्यापि

३९९ एनं विहाय तुलसीविपिनोपकण्ठं
गोप्यः परत्र नयनाम्बुजमीलनानि।
कुर्वन्तु किन्तु तुलसीदलनीलभासं
का वा मुकुन्दमनुविन्दतु लीनमस्मिन् ॥४३॥

—लक्ष्मणस्य

## अथ हिन्दोलक्रीडा[2]

४०० दृशा विदधरे दिशः कमलराजिनीराजिताः
कृता हसितरोचिषा हरिति चन्द्रिकावृष्टयः।
अकारि हरिणीदृशः प्रबलदण्डकप्रस्फुरद्-
वपुर्विपुलरोचिषा वियति विद्युतां[3] विभ्रमः ॥४४॥

—गणपतेः

४०१ उन्नम्य दूरं मुहुरानमन्त्यः कान्ताः श्लथीभूतनितम्बबिम्बाः।
दोलाविलासेन जितश्रमत्वात्प्रकर्षमापुः पुरुषायितेषु ॥४५॥

—बिल्हणस्य

४०२ दोलायमानाः प्रियनुद्यमानहिन्दोलया बालचमूरुनेत्राः।
प्रसारिदेहद्युतिवारिपूरे वितेनिरे विप्लव[4]नानि भूयः ॥४६॥

—ग दाधरस्य

## अथ सन्ध्या

४०३ अस्ताद्रिलम्बिरविबिम्बतयोदयाद्रि-
चूडोन्मिषत्सकलचन्द्रतया च सायम्।

१. क ख व्याजोक्ता निभृतं मुखञ्च। २. क °लनक्रीडा। ३. क विषयति विद्युनां (तां), ख विद्युता। ४. ख किं प्लव°।

सन्ध्याप्रनृत्तहरहस्तगृहीतकांस्य-
तालद्वयेव समलक्ष्यत नाकलक्ष्मीः[1] ॥४७॥

—रत्नाकरस्य

४०४ उच्चैस्तरादम्बरशैलमौलेश्च्युतो रविर्गैरिकगण्डशैलः ।
तस्यैव पातेन विचूर्णितस्य सन्ध्यारजोराजिरिवोज्जिहीते ॥४८॥

—श्रीहर्षस्य

४०५ प्रकटयति वियोगिप्रेयसीविप्रतीपो
भुवनविजययात्राडम्बरं शम्बरारिः ।
यदिह जयति सन्ध्याकैतवेनासमन्ता-
दरुणवसनलेखा काचिदेषा लसन्ती ॥४९॥[2]

४०६ मृगाङ्कमागतं वीक्ष्य सन्ध्या कुलवधूरिव ।
दीपलेखामिषादेषा निर्विवेश निकेतनम् ॥५०॥

—भानुकरस्य

## अथान्धकारः

४०७ चरमगिरिनिकुञ्जमुष्णभानौ भगवति गच्छति विप्रयोगखिन्ना ।
मुकुलितनयनाम्बुजा धरित्री वपुषि बभार तमांसि शैवलानि ॥५१॥

—भानुकरस्य

४०८ इदं नभसि भीषणभ्रमदुलूककोलाहलै-
र्निशाचरविलासिनीनिवहदत्तनेत्रोत्सवम् ।
परिस्फुरति निर्मलप्रचुरपङ्कमग्नोल्लस-
द्वराहकुलमांसलप्रबलवन्ध[3]मन्धं तमः ॥५२॥

—वासुदेवस्य

## अथाभिसारिका[4]

४०९ गाढे तमसि सरन्ती पथि स्खलन्ती सुपिच्छिले मुग्धा ।
अवलम्बनाय वारां धारासु करं प्रसारयति ॥५३॥

---

१. क °वल्लीः । २. ख एतदनन्तरं 'गणपतेः' इत्यस्ति । ३. क °मन्ध° । ४. ख एतदनन्तरं पद्यमिदमस्ति—

४१० चित्रोत्कीर्णादपि विषधराद् भीतिभाजो निशायां
किं नु[1] ब्रूमस्त्वदभिसरणे साहसं नाथ तस्याः ।
ध्वान्ते यान्त्या यदतिनिभृतं[2] बालयात्मप्रकाश-
त्रासात्पाणिः पथि फणिफणारत्नरोधी व्यधायि ॥५४॥

—कस्यापि

४११ रभसादभिसर्तुमुद्यतानां वनितानां सखि वारिदो विवस्वान् ।
रजनी दिवसोऽन्धकारमर्चिर्विपिनं वेश्म विमार्ग एव मार्गः ॥५५॥

—भानुकरस्य

४१२ गन्तुं यदि व्यवसिताऽसि घनान्धकारे
नीला[3]ञ्चलेन तनुमावृणु मुग्धशीले ।
विद्युल्लता यदि पथि प्रतिरोधिनी स्या-
दप्रावृतैव कनकद्रवगौरि गच्छेः ॥५६॥

—कस्यापि

४१३ मन्दं निधेहि चरणौ परिधेहि नीलं
वासः[4] पिधेहि वलयावलिमञ्चलेन ।
मा जल्प साहसिनि[5] शारदचन्द्रकान्त[6]-
दन्तांशवस्तव तमांसि समापयन्ति ॥५७॥

—कस्यापि

४१४ एकत्र कौलव्रतभङ्गशङ्का विदग्धताभङ्गभयं परत्र ।
इत्याकुलानां कुलकामिनीनां गतागतैरेव गता त्रियामा ॥५८॥

—कस्यापि

इति श्रीआङ्कोलकरलक्ष्मणभट्टकृतौ पद्यरचनायां नवमो व्यापारः ।

• • •

---

गाढान्धकारेष्वभिसारिकाणां प्रतप्तचामीकरचारुभासाम् ।
रराज कान्तिः पथि कामिनीनां सौदामिनीवाम्बुदवृन्दगर्भे ॥

—लक्ष्मणस्य

१. *ख* तु । २. *क ख* गाढे निभृतनिभृतं । ३. *क* चेलां° । ४. *ख ग* वासो नीलं । ५. *क ख* °हसिकि । ६. *ग* °कान्ता° ।

# दशमो व्यापारः

## अथ चक्रवाकावस्था

४१५ वापीतोयं तटरुहवनं पद्मिनीपत्रशय्या
चन्द्रालोको विकचकुमुदामोदहृद्यः समीरः ।
यत्रैतेऽपि[1] प्रियविरहिणो दाहिनश्चक्रनाम्न-
स्तत्रोपायः क इव भवतु प्राणसंधारणे यः ॥१॥

४१६ भङ्क्त्वा भोक्तुं न भुङ्क्ते कुटिलविसलताकोटिमिन्दोर्वि[2]तर्का-
त्ताराकारास्तृषार्तः पिबति न पयसां विप्रुषः[3] पत्रसंस्थाः ।
छायामम्भोरुहाणामलिकुलमलिनां वेत्ति सन्ध्यामसन्ध्यां
कान्ताविश्लेषभीरुर्दिनमपि रजनीं मन्यते चक्रवाकः ॥२॥

—कस्याप्येतौ[4]

## अथ तारावर्णनम्

४१७ सिन्धोः सुधांशुशकलं[5] परिगृह्य सन्ध्या
क्षेमङ्करी निपतिताम्बरभूरुहाग्रे ।
चञ्चूपुटेन चपलेन तया विकीर्णा-
स्तारामिषेण पतिता इव पक्ष[6]खण्डाः ॥३॥

४१८ व्योमप्राङ्गणसीम्नि सान्ध्यकिरणं विस्तार्य चेला[7]ञ्चलं
ध्वान्तैः कार्मणपांसुभिश्च[8] जगतां द्राङ् मोहयित्वा दृशौ ।
ताराशौक्तिक[9]मौक्तिकानि विहगश्रेणीस्वच्छद्मना
जिंजि[10]कृत्य च मायिकः स्मरनटो वक्त्राद् बहिर्वर्षति ॥४॥

—भानुकरस्यैतौ

---

१. *ख ग* °ते ते। २. *क* °कोटिमन्दो वि°। ३. *ग* विप्लुषः। ४. *क ख* कयोरपि। ५. *क ख ग* °शफरं। ६. *क* °पक्ष्म°। ७. चैला°। ८. *क ख ग* °स्तु। ९. *क* °मौलिक°। १०. *क ख ग* जींजीं°।

४१९ इयं सन्ध्या तल्पं किमकृततमामम्बरतरोः
प्रवालैर्माहेन्द्री हरिदहिमभानोर्विरहिता ।
यदेषां वृन्तेषु स्फुरदमलमुक्ताचयरुचिः
स्नुतो[1] वारां बिन्दुप्रकर इव तारापरिकरः ॥५॥

४२० अम्बरविपिनमिदानीं तिमिरवराहोऽवगाहते जलधेः ।
रोमसु यदस्य लग्नास्तारकजलबिन्दवो भान्ति ॥६॥

—गणपतेः[2]

४२१ निशाधिनाथस्य करावमर्षात्स[3]म्मीलिताम्भोरुहलोचनायाः ।
निशाङ्गनायाः कपटादुडूनां किं स्वेदबिन्दूत्कर आविरासीत् ॥७॥

—लक्ष्मणस्य

अथ चन्द्रः

४२२ गगनविपिनसिंहः कामभूपातपत्रं[4]
निखिलदिगबलानां कन्दुकं क्रीड[5]नाय ।
मणिरिव रतिभर्तुः कार्मणः पार्वणोऽयं[6]
जयति कुमुदबन्धुर्बन्धुरश्चन्द्रबिम्बः ॥८॥

—लक्ष्मणस्य

४२३ निर्वेदः सरसीरुहस्य महिलाकोपस्य काशीपदं
सिद्धान्तो मकरध्वजस्य तिमिरस्तोमस्य होमस्थली ।
प्रव्रज्या कुमुदम्लमस्य कुलटावाटस्य पाटच्चरः
पूर्वाद्रेरुदियाय विभ्रमवणिग् देवः क्षपाकामुकः ॥९॥

४२४ नभोलताकुञ्जमुपागतायाः प्रमोदपर्याकुलतार[7]कायाः ।
निशाङ्गनायाः[8] स्फुरता करेण शशी तमःकञ्चुकमुन्मोच ॥१०॥

—भानुकरस्यैतौ

४२५ ताराक्षतान्[9] प्रविकिरन्[10] कलकण्ठनादान्
मन्त्राक्षराणि निगदन् कुसुमेषुरेषः ।

१. क मुतो । २. ग °पतेरेतौ । ३. क °मर्शात्स° । ४. का मा °लपत्रं । ५. ख °न्दुकः क्री° । ६. क °तोऽयं । ७. क °कुलितारि° । ८. क ख ग °प्रियायाः । ९. ग °क्षरान् । १०. ग °करन् ।

लाभाय वासरमयैर्मुषितस्य सायं
सञ्चारयत्यमृतदीधितिकांस्यपात्रम् ॥११॥

४२६ दिग्बालाकरकन्दुकः स्मरवधूसीमन्तमुक्तामणिः
कामक्षोणिपतेर्विहारवलभीनिर्यूहपारावतः ।
हट्टव्योम्नि[1] विकीर्णतारकमणिः श्यामावणिक्सुभ्रुवः
स्फारः स्फाटिकसम्पुटः कुमुदिनीकान्तोऽयमुन्मीलति ॥१२॥

—गणपतेरेतौ[2]

## अथ सकलङ्कश्चन्द्रः

४२७ अयं पुरः पार्वणशर्वरीशः किं दर्पणोऽयं रजनीरमण्याः ।
यतस्तदीयं प्रतिविम्बमस्मिन् संलक्ष्यते लाञ्छनकैतवेन ॥१३॥

—लक्ष्मणस्य[3]

४२८ प्रदोषमातङ्गमनङ्गदेवस्तुङ्गं समारुह्य समागतोऽयम् ।
सिन्दूरिते तस्य सुधांशुकुम्भे किमङ्कुशो लक्ष्मभिषेण दत्तः ॥१४॥

—गणपतेः

४२९ ख्याता वयं समधुपा मधुकोशवत्य-
श्चन्द्रः प्रसारितकरो द्विजराज एषः ।
अस्मत्समागमकृतोऽस्य पुनर्द्वितीयो
मा भूत्कलङ्क इति सङ्कुचिता नलिन्यः ॥१५॥

—कस्यापि

४३० मम प्रियां कैरविणीं करेण सन्तापयामास दिनाधिनाथः ।
इतीव दुःखैर्विकलः कलावान् पपौ विषं लक्ष्मभिषेण सद्यः ॥१६॥

—कस्यापि

---

१. ख ग हट्टे व्योम्नि । २. ख एतौ गणपतेः । ३. ग 'लक्ष्मणस्य' इति नास्ति ।

४३१ कलाधिनाथानयनाय सायं कुमुद्वतीप्रेषित एष भृङ्गः ।
किमिन्दुनालिङ्ग्य सरागमङ्के कृतः कलङ्कभ्रममातनोति ॥१७॥

—वाणीविलासस्य

४३२ समस्तापास्तांशौ विरतिमहिमांशौ परिगते
दिवाभीतः शीतद्युतिरयमुदीतः समुदभूत् ।
स यान् ध्वान्तध्वांक्षानपि यदपिवत् कुक्षिषु गता-
स्त एवाङ्के वीजं शशिनि किल शङ्के समभवन् ॥१८॥

—लक्ष्मणस्य

## अथ हर्म्यम्

४३३ निपीय पीयूषमयूखबिम्बे सुधां श[1]रावप्रतिमे कपोताः ।
नक्षत्रमालासु कणभ्रमेण क्रमेण[2] चञ्चुं चपलाः क्षिपन्ति ॥१९॥

४३४ यत्रालसा हरिणशावदृशो विहार-
पर्यस्तहारमणिमेदुरकेलितल्पाः ।
तारासु सौधशिखराञ्चलचुम्बिनीषु
मुक्ताभ्रमेण करपल्लवमर्पयन्ति ॥२०॥

—एतौ[3] गणपतेः[4]

४३५ भित्तौ भित्तौ प्रतिफलगतं भालसिन्दूरपूरं
दृष्ट्वा दृष्ट्वा कमलनयना केलिदीपभ्रमेण ।
कान्ते चोलं हरति हरितं लोलमालोकयन्ती
यत्र प्रच्छादयति सहसा पाणिपङ्केरुहेण ॥२१॥

—भानुकरस्य

४३६ स्फुरत्तुषारांशुमरीचिजालैर्विनिह्नुताः स्फाटिकसौधपङ्क्तीः ।
आरुह्य नार्यः क्षणदासु यस्यां[5] नभोगता देव्य इव व्यराजन् ॥२२॥

—माघकवेः[6]

---

१. *का-मा* सुधाश° । २. *क* भ्रमेण । ३. *ख* 'एतौ इति नास्ति । ४. *ग* गणपतेरेतौ ।
५. *ख* यत्र । ६. *ख ग* माघस्य ।

४३७ यदीयसौधस्फुरदिन्द्रनीलगवाक्षकुक्षिं प्रविशन् हिमांशुः ।
उत्कन्धराणामनिशं नराणामिन्दूपरागभ्रममातनोति ॥२३॥

—गदाधरस्य[1]

इति श्रीआङ्कोलकरलक्ष्मणभट्टकृतौ[2] पद्यरचनायां दशमो व्यापारः ।

• • •

१. का-मा 'गदाधरस्य' इति नास्ति । २. ग °भट्टविरचितायां ।

## एकादशो व्यापारः

४३८ यतो द्वये निरूप्यत्वं शृ[1]ङ्गारस्य रसस्य तु ।
अतः संक्षेपतः कुर्वे नायकानां निरूपणम् ॥१॥

### अथानुकूलो नायकः

४३९ अरुणदलनलिन्यास्निग्धपादारविन्दा
कठिनतरधरण्यां यान्त्य[2]कस्मात् स्खलन्ती ।
अवनि तव सुतेयं पादविन्यासदेशे
त्यज निजकठिनत्वं जानकी यात्यरण्यम् ॥२॥

—महानाटकात्

४४० आत्मीयं चरणं दधाति पुरतो निम्नोन्नतायां भुवि
स्वीयेनैव करेण कर्षति तरोः पुष्पं श्रमाशङ्कया ।
तल्पे किञ्च मृगत्वचा विरचिते निद्राति भागैर्निजै-
रन्तःप्रेमभरालसां[3] प्रियतमामङ्के दधानो हरः ॥३॥

४४१ वक्षोजद्वयशीलनेऽपि नखरातङ्कं न (हि) शङ्के तव[4]
स्याद् विम्बाधरचुम्बनेऽपि दशनच्छेदेन खेदोदयः ।
आश्लेषेऽपि वपुर्लता तव पुनर्भिद्येत रोमाङ्कुरा-
दित्थं पद्मविलोचने विरमति त्रासो न दासस्य मे[5] ॥४॥

### अथ दक्षिणनायकः

४४२ एतत्पुरः स्फुरति पद्मदृशां सहस्र-
मक्षिद्वयं कथय कुत्र निवेशयामि ।

---

१. क 'द्वयनिरूप्यत्वं शृ°, क ग °द्वयनिरूप्यत्वाच्छृ° । २. का-मा यात्य° । ३. क ख ग °लसः । ४. क ख न शङ्केत कः, ग शङ्केन्तकः । ५. ख ते ।

इत्याकलय्य नयनाम्बुरुहे निमील्य
रोमाञ्चितेन वपुषा स्थितमच्युतेन ॥५॥

४४३ चिरादुपेतः प्रथमं प्रदानं[1] विचिन्त्य कर्तुं न पतिः शशाक ।
मध्येसभं[2] केवलमङ्गनानां संयो[3]जयामास विभूषणानि ॥६॥

—एते भानुकरस्य[4]

४४४ दृष्ट्वा पतिः पञ्चदशां सहस्रं दातुं न कस्यैचिदलं तदेकम्
एकैकमुत्कृत्य कृती दिदेश सर्वाणि पत्राणि सह[5]स्रपत्रात् ॥७॥

—लक्ष्मणस्य

## अथ धृष्टो नायकः

४४५ वद्धो हारैः करकमलयोर्द्वारतो वारितोऽपि
स्वापं ज्ञात्वा पुनरुपगतो दूरतो दत्तदृष्टिः ।
तल्पोपान्ते कनकवलयं भ्रष्टमन्वेषयन्त्या
दृष्टो धृष्टः पुनरपि मया पार्श्व एव प्रसुप्तः ॥८॥

४४६ एतस्य रहसि वक्षसि सरसिजपत्रेण ताडितस्यापि ।
दयितस्य वीक्ष्य हसितं प्रियसखि हसितं ममाप्या[6]सीत् ॥९॥

## अथ धूर्तो नायकः

४४७ धुन्वन्त्याः करपल्लवं मृगदृशो जातागसः प्रेयसो
वक्त्राम्भोरुह[7]हेमकङ्कणमणिस्पर्शे समुन्मीलति ।
चक्षुर्विघ्नितमित्युदीर्य सहसा धूर्तेन तच्चेष्टितं
तस्थौ येन चिराय सैव शिरसा नम्रेण शातोदरी ॥१०॥

—भानु[8]करस्यैतौ[9]

---

१. ग च (व?) दानं । २. का-मा °सभं । ३. ख ग °नानामायो° । ४. ग भानुकरस्यैतौ ।
५. ख स हेमपत्राणि सह° । ६. ग मयाऽप्या° । ७. क °रुहि । ८. क अथ भानु° ।
९. ख °स्यैते ।

अथ मानी नायकः

४४८ संत्यक्तजल्पे परिवृत्तवक्त्रे कृतागसि प्रेयसि तल्पसुप्ते ।
बाला मुहुर्न्यस्यति बाहुपाशं मुहुर्मुखं सम्मुखमातनोति ॥११॥

—लक्ष्मणस्य

अथानभिज्ञो नायकः

४४९ शून्ये सद्मनि योजिता बहुविधा भङ्गिर्वनं निर्जनं
पुष्पव्याजमुपेत्य निर्गतमथ स्फारीकृता दृष्टयः ।
ताम्बूलाहरणच्छलेन विहितौ व्यक्तौ च वक्षोरुहा-
वेतेनापि न वेत्ति दूति कियता यत्नेन संज्ञास्यति ॥१२॥

४५० पर्यस्तालकगण्डपालि वदनाम्भोजं मया चुम्बितं
प्रत्यङ्गं करपल्लवेन पुलकश्रेणी[1]स्पृशा लालितम् ।
दोर्भ्यां तस्य कठोरकङ्कणरवं दोर्वल्लिरालिङ्गिता
निद्रात्येव मुहुस्तथापि दयितः कस्मै किमाचक्ष्महे ॥१३॥

अथ शिशुनायकः

४५१ अनवाप्तवयसि रहसि प्रेयसि पर्यङ्कमागते जयति ।
मदचपललोचनाया मूकस्वप्नायितो[2] भावः ॥१४॥

४५२ प्रियतममजातयौवनमन्तः परिचिन्त्य पद्माक्षी ।
अङ्गानि भूषयन्ती मालीमालीढयौवना हसति ॥१५॥

—भानु[3]करस्य

४५३ सम्मुखं मुखविधुं न चुम्बतः कुर्वतो न च कुचे करार्पणम् ।
पत्युरल्पवयसोऽन्तिके गता दैवमेव विनिनिन्द सुन्दरी ॥१६॥

—लक्ष्मणस्य

---

१. °श्रेणि° । २. क ग °प्नायते । ३. ख एते भानु° ।

## अथ वृद्धनायकः

४५४ उद्भिदुरं[1] स्तनवदनं लोचनमलिगर्वमोचनं सुदृशः ।
दृष्ट्वा विगतविचारं धातारं निन्दति स्थविरः ॥१७॥

—भानुकरस्य

४५५ अचिन्तनीया विधिवञ्चनेयं यदम्बुजाक्षी स्थविरस्य भर्तुः ।
स्वयं समादाय करं निधाय वक्षोजयुग्मे स्वपिति श्वसन्ती ॥१८॥

—लक्ष्मणस्य

## अथाविदग्धनायकः

४५६ क्रीडासु सव्रीडमहो विलासान्नीवीनिरोधे निहितं मृगाक्ष्या ।
कराम्बुजं वीक्ष्य पतिः सरोषो ददौ ललाटे सुदृशश्चपेटाम् ॥१९॥

—लक्ष्मणस्य[2]

## अथ देशान्तरोपगतनायकः[3]

४५७ दिदृक्षमाणः क्षणमायताक्ष्या मुखाम्बुजं मञ्जुलमध्वनीनः ।
मुहूर्तमात्रं सुमूहूर्तकालं स वर्षकालं कलयाञ्चकार ॥२०॥[4]

४५८ निशम्य केलीभवनोपकण्ठे मञ्जीरमञ्जुध्वनिमध्वनीनः ।
यथा तथा बद्धकथावशेषं[5] समापयामास समं सुहृद्भिः ॥२१॥

—कस्यापि

४५९ मुखं प्रियायाः समुदीक्षमाणः कान्तो दिनस्यान्तमपेक्षमाणः ।
मुहुर्मुहुर्व्योमनि तिग्मभानौ निवेशयामास विलोचनानि ॥२२॥

—भानुकरस्य

## अथ षडृतुवर्णनम् । तत्र वर्षर्तुः

४६० कामेन कामं प्रहिता जवेन प्रावृट् चचाल त्रिजगद् विजेतुम् ।
किं चन्द्रबिम्बं दधि भक्षयन्ती सन्धारयन्ती हरितः शुभाय ॥२३॥

—लक्ष्मणस्य

---

१. ख °भित्वरं । २. ख 'लक्ष्मणस्य' इति नास्ति । ३. ख °न्तरादुपगतो नायकः । ४. क एतदनन्तरं 'लक्ष्मणस्य' इत्यस्ति, ख एतौ लक्ष्मणस्य । ५. क °विशेषं ।

## अथ जलधरः

४६१ शीतलादिव संत्रस्तं प्रावृषेण्यान्नभस्वतः ।
नभो बभार नीरन्ध्रं जीमूतकुलकम्बलम् ॥२४॥

—सर्वदासस्य[1]

४६२ चलद्बलाकादशनाभिरामः परिस्रवद्वारिमदाम्बुधारः ।
आहन्यमानस्तडिदंङ्कुशेन[2] स्मरस्य दध्वान घनद्वि[3]पेन्द्रः ॥२५॥

—गदाधरस्य

४६३ वर्षासु जाता नवयौवनश्रीराशावधूः प्रौढपयोधराऽभूत् ।
पुष्पोद्गमोऽजायत मालतीनां बभूवुरस्पृश्यतमास्तटिन्यः ॥२६॥

४६४ दशमुखभजमानवाहिनीकः स्फुरदतिघोरगभीरमेघनादः ।
अयमिह समयः पयोधराणां तुलयति रावणपत्तनोपकण्ठे[4] ॥२७॥

—रामचन्द्रस्यैतौ[5]

## अथ घनदुर्दिनम्

४६५ घनतरघनवृन्दच्छादिते व्योम्नि लोके
सवितुरथ हिमांशोः सङ्कथैव व्यरंसीत् ।
रजनिदिवसभेदं मन्दवाताः शशंसुः
कुमुदकमलगन्धानाहरन्तः क्रमेण ॥२८॥

४६६ घनतरघनवृन्दच्छादिते व्योम्नि लोके
सवितुरथ सुधांशोः संकथैव व्यरंसीत् ।

---

१. ख एतदनन्तरं पद्यमिदं लिखति—

नभोऽवगाहाः परिलुप्तदाहाश्चलन्ति रंहोगतयोऽम्बुवाहाः ।
नभो मुरारेस्तव(प?)तापहन्त्र्याः कलिन्दपुत्र्या इव किं प्रवाहः ॥

—लक्ष्मणस्य

२. का-मा °दंशुकेन । ३. ख घनाद् द्वि° । ४. ख °कण्ठम् । ५. ख एतदनन्तरं पद्यमिदं लिखति—

आशावयस्याभिरुपाद्भ्रियन्ते पयोदनीलोत्पलपल्लवानि ।
वसन्तविश्लेषरुजं वहन्त्या भुवो निदाघस्मरतापशान्त्यै ॥

—रुद्रचन्द्रस्य

विरहमनुभवन्ती सङ्गमं चापि भर्त्रा
रजनिदिवसभेदं चक्रवाकी शशंस ॥२९॥

—अम्बष्ठस्य[1]

४६७ घनोद्गमे गाढतमेऽन्धकारे न कोऽपि निर्णेतुमहः शशाक ।
स्पृशन् मुहुः किन्तु करेण नाभीसरोजमाभीरकुलाधिनाथः ॥३०॥

—रामचन्द्रस्य

अथ घनगर्जितम्

४६८ या कामिनी सा यदि मानिनी स्यात्स्मरस्य राज्ञो ह्यपराधिनी स्यात् ।
इतीव दण्डैः किमु ताड्यतेऽसौ[2] कादम्बिनी कामनृपस्य ढक्का ॥३१॥

४६९ चन्द्रबिम्बरविबिम्बतारकामण्डलानि घनमेघडम्बरैः ।
भक्षितानि जलदोदरेषु तद्रोदनध्वनिरिवैष ग[3]र्जितम् ॥३२॥

४७० निद्रितस्य बत शम्बरद्विषो जागराय किमु वारिवाहकः ।
ऊर्जितं दधदतीव गर्जितं सम्भ्रमन्नभसि सम्भ्रमाद् ययौ ॥३३॥

—एते लक्ष्मणस्य

अथ विद्युत्

४७१ याचितेन बहु चातकद्विजैरम्बुदेन जलदानपूर्वकम् ।
हेमयष्टिरिव दूरमीरिता सञ्चचार रुचिरा चिरप्रभा ॥३४॥

—कविराजस्य

४७२ क्षपां क्षामीकृत्य[4] प्रसभमपहृत्याम्बु सरितां
प्रताप्योर्वीं कृत्स्नां तरुगहनमुच्छोष्य सकलम् ।

---

१. ख 'पूर्वार्द्धं तदेव, उत्तरार्द्धमम्बष्ठस्य' इति लिखति । २. ख तत्ताड्यते किं ध्वनिपूर्व-विक्का । ३ ख °रिवाभिग° । ४. क क्ष (क्षा) मां कृत्य ।

क्व सम्प्रत्युष्णांशुर्गत इति तदन्वेषणपरा-
स्तडिद्दीपालोका दिशि दिशि चरन्तीव[1] जलदाः ॥३५॥

—पाणिनेः

## अथ वर्षाविरहिणी

४७३ मन्दं मन्दं ध्वनति जलदो बिन्दुवृन्दानि वर्षन्
मन्दं मन्दं किरति पवनः केतकीकेसराणि ।
स्वैरं स्वैरं लसति[2] च तडित् किन्तु वाच्यं मया ते
वारं वारं वितर सखि मे जीवनं जीवनाय ॥३६॥

४७४ सहचरि परिपन्थिनं पुरस्ताज्जलधरमन्तककासरानुकारम् ।
परिहर परिहार्यमाशु नो चेद् वितर जलाञ्जलिमेव जीवनाय ॥३७॥

—एतौ लक्ष्मणस्य

## अथ खद्योतः

४७५ खद्योतपोतप्रकराः समं खे द्योतन्त एते द्युतिभिः प्रचण्डाः ।
पयोदसंघट्टविघट्टनस्य[3] किं वैद्युतस्य ज्वलनस्य खण्डाः ॥३८॥

—लक्ष्मणस्य

४७६ पाथोधरीयजलदेन[4] विदारितस्य
मार्तण्डमण्डलपचेलिमदाडिमस्य ।
व्योमाङ्गणे निपतिता इव बीजपूराः
खद्योतपोतसुषमां स्फुटमाव[5] हन्ति ॥३९॥

४७७ प्राचीमहीधरशिलाविनिवेशितस्य
धाराधरस्फुरदयोघनताडितस्य ।
तप्तायसस्य तपनस्य कणा विकीर्णाः
खद्योतपोतकपटादिव विस्फुरन्ति ॥४०॥

—भानुकरस्यैतौ

---

१. ख चलन्तीव । २. क ख लवति । ३. ख °ट्टितस्य । ४. क °दरीरपटलेन, ख °दकीरपटलेन । ५. क ख सुखमाव° ।

अथ हंसः

४७८ तटमुपगतं पद्मे पद्मे निवेशितमाननं
प्रतिपुटकिनीपत्रच्छायं मुहुर्मुहुरासितम् ।
मुहुरुपगतैरस्रैः कोष्णीकृता जलवीचयो
जलदमलिनां हंसेनाशां विलोक्य पिपासता[1] ॥४१॥

—कस्यापि

इति श्रीआ[2]ङ्कोलकरलक्ष्मणभट्टकृतौ[3] पद्यरचनायामेकादशो व्यापारः ।

• • •

१. क पियासता । २. ख इति आ° । ३. ख °भट्टविरचितायां ।

## द्वादशो व्यापारः

**अथ शरत्**

४७९ स्वच्छाम्बराच्छादितसर्वगात्रा राजीवनेत्रा लसदिन्दुवक्त्रा ।
क्वणन्मरालव्रजनूपुराढ्याऽऽययौ मदाढ्येव शरन्नताङ्गी[1] ॥१॥

—लक्ष्मणस्य

४८० पयोदजालजम्बालजटिला शरदङ्गना ।
अम्बरं धावया[2]मास चन्द्रिकाचयवारिभिः ॥२॥

४८१ अहो बाणस्य सन्धानं शरदि स्मरभूपतेः ।
अपि सोऽयं त्विषामीशः कन्याराशिमुपागतः ॥३॥

४८२ अथोत्तरस्यां दिशि खञ्जरीटमालोक्य कोऽपि स्मितमादधानः ।
कस्याश्चिदास्ये स्मितचारुभासि सम्भावयामास विलोचनानि ॥४॥

—भानुकरस्यैतौ[3]

४८३ तीक्ष्णं रविस्तपति नीच इवाचिराढ्यः
शृङ्गं रुरुस्त्यजति मित्रमिवाकृतज्ञः[4] ।
तोयं प्रसीदति मुनेरिव चित्तवृत्तिः
कामं[5] दरिद्र इव शोषमुपैति पङ्कः ॥५॥

—भासस्य

४८४ वान्ति कल्हारसुभगाः सप्तच्छदसुगन्धयः ।
वाता नवरतग्लानवधूगमनमन्थराः ॥६॥

—वाल्मीकेः

---

१. ख सदा मदाढ्या शरदाजगाम । २. का-मा धारया° । ३. °स्यैतौ । ४. क °कृतिज्ञः । ५. क कामी ख कामा ।

४८५ कलमाः पाकविनम्रा मूलतलाघ्रातसुरभिकल्हाराः ।
पवनाकम्पितशिरसः प्रायः कुर्वन्ति परिमलश्लाघाम् ॥७॥

—भोजप्रबन्धात्

४८६ प्रबोधभाजः परमस्य पुंसो विलोचने द्वे किल मुक्तनिद्रे ।
व्यपेतपाथोधरपक्ष्मरोधे व्यराजतां व्योमनि पुष्पवन्तौ[1] ॥

—कविराजस्य

४८७ चन्द्रे गते सभिकतामिह कार्तिके यद्
द्यूतोत्सवं रचयतो रतिपञ्चबाणौ ।
तत्रेरिताः सपदि ये तु कपर्दिकौघा-
स्तारास्त एव परितो वियति स्फुरन्ति ॥९॥

—लक्ष्मणस्य

## अथ हेमन्तः

४८८ हेमन्तहिमनिस्पदमवलोक्य मनोभवम् ।
प्रहर्तुं सुभ्रुवां चेतो रविर्देवो धनुर्दधौ ॥१०॥

४८९ अभ्युल्लसन्ति विनिवारितचन्दनाना-
मेणीदृशां वपुषि कुङ्कुमपत्रलेखाः ।
अभ्यागताः करसरोजपदारविन्द-
संरक्षणाय किरणा इव तिग्म[2]भानोः ॥११॥

४९० अम्बरमेष रमण्यै यामिन्यै वासरः प्रेयान् ।
अधिकं ददौ निजाङ्गादथ सङ्कुचितः स्वयं तस्थौ ॥१२॥

—भानुकरस्यैतौ[3]

४९१ लज्जा प्रौढमृगीदृशामिव नवस्त्रीणां रतेच्छा इव
स्वैरिण्या नियमा इव स्मितरुचः कुल्याङ्गनानामिव ।
दम्पत्योः कलहा इव प्रणयिता वाराङ्ग[4]नानामिव
प्रादुर्भूय तिरोभवन्ति सहसा हैमन्तिका वासराः ॥१२॥

—कविकङ्कणस्य

---

१. °दन्तौ । २. क शीत° । ३. ख एते भानुकरस्य । ४. क ख कौलाङ्ग° ।

४९२ अपि दिनमणिरेष क्लेशितः शीतसङ्घै-
रथ निशि निजभार्यां गाढमालिङ्ग्य दोर्भ्याम् ।
स्वपिति पुनरुदेतुं सालसाङ्गस्तु तस्मात्
किमु न भवतु दीर्घा यामिनी कामिनीयम्[1] ॥१४॥

४९३ ददात्य[2]धरचुम्बनं नयपङ्कजं मुद्रय-
त्यमन्दपुलकं मनागमलमङ्गमालिङ्गते[3] ।
विचालयति चालकं[4] चपललोचनानां[5] हठात्
तनोत्यविनयं मरुत्प्रिय इवैष हैमन्तिकः ॥१५॥

४९४ कामिनो हन्त हेमन्तनिशि शीतज्वरातुराः ।
जीवन्ति हरिणाक्षीणां वक्षोजाश्लेषरक्षिताः ॥१६॥

—एते लक्ष्मणस्य

४९५ हे हेमन्त स्मरिष्यामि त्वय्यतीते गुणद्वयम् ।
अयत्नशीतलं वारि निशाश्च सुरतक्षमाः[6] ॥१७॥

४९६ हसन्तीं वा हसन्तीं वा हसन्तीं वामलोचनाम् ।
हेमन्ते ये न सेवन्ते ते नूनं दैव[7]वञ्चिताः ॥१८॥

— कयोरपि

## अथ शिशिरः

४९७ तुषारभारविक्षुण्णं प्रेक्ष्य पङ्कजकाननम् ।
पङ्केरुहदृशः शङ्के पाणिः कम्पमविन्दन्त ॥१९॥

४९८ आचुम्ब्य बिम्बाधरमङ्गवल्लि-
मालिङ्ग्य संपृश्य कपोलपालीम् ।
श्रीखण्डमादाय करेण कान्तः
सन्त्रासयामास सरोरुहाक्षीम् ॥२०॥

---

१. क ख हैमनी यामिनीयम् । २. का-मा दधत्य° । ३. ख °ङ्गति । ४. क चौलकं ।
५. क ख °चनाया । ६. क °ताक्षमाः । ७. क नरा देव°, ख नूनं ते दैव° ।

४९९ वने समुल्लसद्भासो राजन्ते[1] कुन्दकोरकाः ।
शीतभीता लता[2]कुन्दमाश्रिता इव तारकाः ॥२१॥

—भानुकरस्यैतौ

५०० शर्वरीषु किल शैशिरीषु तद् योषितां निधुवनेषु केलिषु ।
शीतशीर्यदधरेषु चुम्बनैः सीत्कृतं द्विगुणितं तदाभवत् ॥२२॥

५०१ याम्या दिशः सन्निधिचारिणस्ते स्ववैरिणः शमनवाहनस्य ।
भिया हयाः किं तरणेः प्रतूर्णं जग्मुस्ततो दीनमिदं दिनं किम् ॥२३॥

—लक्ष्मणस्यैतौ

## अथ वसन्तसन्धिः

५०२ चूतानां[3] चिरनिर्गताऽपि कलिका वध्नाति न स्वं रजः
सन्नद्धं यदपि स्थितं कुरवकं तत्कोरकावस्थया ।
कण्ठेषु स्खलितं गतेऽपि शिशिरे पुंस्कोकिलानां रुतं
शङ्के संहरति स्मरोऽपि चकितस्तूणार्धकृष्टं शरम् ॥२४॥

—कालिदासस्य

५०३ आपृच्छन्ते मलयजतरूनास्वजन्ते च वल्ली-
राभाषन्ते चिरपरिचितान् मालिनीनिर्झरौघान्[4] ।
अद्य स्थित्वा द्रविडमहिलामन्दिरे श्वः प्रभाते
प्रस्थातारो मलयमरुतः कुर्वते संविधानम् ॥२५॥

५०४ अनुभूतचरेषु दीर्घिकाणामुपकण्ठेषु गतागतैकतानाः ।
मधुपाः कथयन्ति पद्मिनीनां सलिलैरन्तरितानि कोरकाणि ॥२६॥

५०५ उषसि भ्रमरयुवानः स्वप्ने दृष्ट्वा सरोजसाम्राज्यम् ।
गतकलपकुन्द[5]तल्पाः सरसीसलिलानि जिघ्रन्ति ॥२७॥

—केषामप्येते

---

१. क ख रेजिरे । २. क भातालिला° । ३. क ख आम्राणां । ४. ख °चितात्पा(न्मा?) लयान्निर्झरौघान् । ५. ख कनकलपकन्द° ।

५०६ व्यतीतकल्पे शिशिरैकबाल्ये सङ्कल्पपु[1]ष्पोद्गमबन्धुराङ्गी ।
इयं लवङ्गी युवभृङ्गसङ्गादुच्छूनगुच्छ[2]स्तनिकेव भाति ॥२८॥

५०७ भृङ्गीरवो मङ्गलगीतमासीत्पिकध्वनिर्दुन्दुभितामयासीत् ।
प्रस्थातुकामस्य जगज्जयाय स्मराज्ञया हन्त वसन्तकस्य ॥२९॥

—लक्ष्मणस्यैतौ

## अथ वसन्तः

५०८ प्रयान्ति[3] पान्थास्त्वरया गृहाणि भवत्कृतान्तश्चरते[4] वसन्तः ।
इतीव भृङ्गारवतो रसालैः सन्ताड्यते किं पटहः पिकोऽयम् ॥३०॥

—लक्ष्मणस्य

५०९ स्थलकमलतरूणां कामिनीलोचनेषु
क्षिपति मुकुलमुष्ट्या धूलिजातं[5] विशालम् ।
तदनु हरति हन्त स्वान्तसर्वस्वमासा-
मयमनयविदग्धो धूर्तवन्मीनकेतुः ॥३१॥

—गणपतेः

५१० कामस्य जेतुकामस्य मिलनाय महःपतेः ।
देवो मीनं त्विषां मीने[6] द्वारीकर्तुमिवाययौ ॥३२॥

५११ उत्क्रष्टु[7]मम्बुजदृशामिव मानरत्न-
मादाय षट्पदतिलान्[8] मधुवारिपूरान्[9] ।
पुंस्कोकिलस्य कलकूजितकैतवेन
सङ्कल्पवाक्यमयमातनुते रसालः ॥३३॥

५१२ रणत्कङ्कणानां झणन्नूपुराणां चलत्कुण्डलानां क्वणत्किङ्किणीनाम् ।[10]
वधूनां मुखाम्भोरुहं द्रष्टुकामो रथं मन्थरं चक्रबन्धुश्चकार ॥३४॥

भानुकरस्यैते—

---

१. ख संलक्ष्यपु° । २. ख °पुष्प° । ३. ख प्रयात । ४. क चलतो, ख चलितो । ५. क ख °जालं । ६. क दीवो मीनं त्विषा मीनो । ७. क उत्सृष्ट° । ८. क षड्विदलतान् । ९. क ख °पूतान् । १०. क ख रणत्कङ्कणानां चलत्कुण्डलानां क्वणत्किङ्किणीनां रणन्नूपुराणाम् ।

अथ ग्रीष्मः

५१३ निदाघकाले किल चण्डरश्मिप्रचण्डरश्मिप्रकरावलीढम् ।
स्यादेव दग्धं जगदेव न स्याद् यदि स्रवत्स्वेदजलावलीनम् ॥३५॥

५१४ स्वदेहघर्मोदकपिच्छिलेऽस्मिन्नभःस्थले किं तरणेस्तुरङ्गाः ।
स्खलत्खुरा न त्वरया विचेलुस्ततो नु दीर्घा दिवसा निदाघे ॥३६॥

—द्वौ लक्ष्मणस्य

५१५ माध्वीकदुर्भिक्षमलिद्विजानां प्रदोषकालः पिकपण्डितानाम् ।
जरालवो मन्मथनायकस्य निदाघकालः समुपाजगाम ॥३७॥

—गदाधरस्य

५१६ तप्ता मही विरहिणामिव चित्तवृत्ति-
स्तृष्णाध्वगेषु कृपणेष्विव वृद्धिमेति ।
सूर्यः करैर्दहति दुर्वचनैः खलो नु
च्छाया सतीव न विमुञ्चति पादमूलम् ॥३८॥[1]

—कस्यापि

५१७ अथ संसारसंहारवासनाबन्धवासितः ।
अजायत वृषारूढो भैरवो महसां निधिः ॥३९॥

५१८ अत्युल्लसद्बिसरहस्ययुजा भुजेन
वक्त्रेण शारदसुधांशुसहोदरेण ।
पीयूषपोष[2]सुभगेन च भासितेन
त्वं चेत्प्रसीदसि मृगाक्षि कुतो निदाघः ॥४०॥

१. क ख एतदनन्तरं पद्यमिदमस्ति—

प्रतिगतमर्थिजनानां विच्छिन्नाशं समूहमवलोक्य ।
स्फुटितमपयशस्तापादिव हृदयतलं तडागस्य ॥

—कस्यापि

२. क °यूष° ।

५१९ मलयपवनचञ्चच्चन्दनस्यन्दशीतं
जलनिधितनयायाः कण्ठमालिङ्ग्य दोर्भ्याम्।
दिनकरकरजालज्वालया दूनदेहो
जलधिपयसि देवो वासुदेवो निदद्रौ ॥४१॥

—एते भानुकरस्य

इति श्रीआ[1]ङ्कोलकरलक्ष्मणभट्टकृतौ[2] पद्यरचनायां द्वादशो व्यापारः।

• • •

१. ख इति आ॰। २. ख ॰भट्टविरचितायां।

## त्रयोदशो व्यापारः

शृङ्गारस्य निरूपितकल्पत्वादल्पतया हास्यरसादयोऽपि नि[1]रूप्यन्ते—

### अथ हास्यरसः

५२० प्रातः[2] प्रकाममहिफेनरसं निपीय
वृद्धो[3] वृतः शिशुगणैः प्रलपन् वचांसि ।
आघूर्णयन्नयनमाकुलयन् मुखेन्दु-
मुद्भ्रामयन् वपुरुपैति नृपस्य वेश्म ॥१॥

—भानुकरस्य

५२१ उपभुक्तखदिरवीटक[4]जनिताधररागभङ्गभयात् ।
पितरि मृतेऽपि हि वेश्या रोदिति हा तात तातेति ॥२॥

—क्षेमेन्द्रस्य

५२२ सामगायनपूतं मे नोच्छिष्टमधरं कुरु ।
उत्कण्ठिताऽसि चेद् भद्रे कर्णं चुम्बस्व दक्षिणम् ॥३॥

—कयोरपि

५२३ रे रे लोकाः कुरुध्वं श्रवणपुटपिधानं द्रुतं[5] हस्तयुग्मैः
शैलाः सर्वेऽपि यूयं भवत गुरुतराः सावधाना धरित्र्याम् ।
शीघ्रं रे रावण त्वं विरचय वसनैर्नासिकानां पिधानं
सुप्तोऽयं कुम्भकर्णः कटुरवविकटं शर्धते[6] दीर्घमुच्चैः ॥४॥

५२४ गताः केचित् प्रबोधाय स्वपन्तं कुम्भकर्णकम् ।
तदधःपवनोत्सर्गादुड्डीय पतिताः क्वचित् ॥५॥

—लक्ष्मणस्यैतौ

---

१. ख हास्यादयो रसा नि° २. *कामा* पीतः । ३. ख भण्डो । ४. क °वीटिक° ।
५. °पुटपिधां सत्वरं । ६. क श्रद्धते (?), ख पर्वते ।

अथ करुणरसः

५२५ कनकमृगमुदस्य स्वां कुटीं सम्प्रविष्टः
क्वचिदपि न वधूटीं नो(सं) ददर्शाङ्गणादौ ।
तदपि स रघुवीरः पर्णशालागृहान्त-
र्न विशति हृदयाशातन्तुनाशातिभीरुः ॥६॥

—लक्ष्मणस्य

५२६ अनुवनमनुयान्तं बाष्पवारि त्यजन्तं
मृदितकमलदामक्षाममालोक्य रामम् ।
दिनमपि रविरोचिस्तापमन्तः प्रपेदे
रजनिरपि च ताराबाष्पबिन्दून् बभार ॥७॥

—भानुकरस्य

५२७ सीतामपास्य त्रपया नतास्यं समागतं[1] लक्ष्मणमानिरीक्ष्य ।
बभूव बाष्पाम्बुधिमध्यलीनो दृगन्तमीनो रघुनन्दनस्य ॥८॥

—कस्यापि

५२८ असारं संसारं परिमुषितरत्नं त्रिभुवनं
निरालोकं लोकं मरणशरणं बान्धवजनम् ।
अदर्पं कन्दर्पं जननयननिर्माण[2]मफलं
जगज्जीर्णारण्यं कथमसि विधातुं व्यवसितः ॥९॥

—भवभूतेः

५२९ शीलानि ते चन्दनशीतलानि श्रुतानि भूमीतलविश्रुतानि ।
तथापि जीर्णौ पितरौ वनेऽस्मिन् विहाय हा वत्स कथं प्रयासि ॥१०॥

—गदाधरस्य

५३० अविशीर्णकान्तपत्रे नव्यदशे सुमुखि सम्भृतस्नेहे ।
मद्गेहदीपकलिके कथमुपयातासि निर्वाणम् ॥११॥

—लीलावतीकारस्य

१. ख °मानतं । २. क °निर्वाण° ।

५३१ यस्याः कुसुमशय्यापि कोमलाङ्ग्या रुजाकरी ।
साधिशेते कथं दीना ज्वलन्तीमधुना चिताम् ॥१२॥

—दण्डिनः

५३२ स्रगियं यदि जीवितापहा हृदये किं निहिता न हन्ति माम् ।
विषमप्यमृतं क्वचिद् भवेदमृतं वा विषमीश्वरेच्छया ॥१३॥

—कालिदासस्य

५३३ आदाय मांसमखिलं स्तनवर्जमङ्गा-
न्मां मुञ्च वागुरिक यामि कुरु प्रसादम् ।
सीदन्ति शष्पकवलग्रहणानभिज्ञा
मन्मार्गवीक्षणपराः शिशवो मदीयाः[1] ॥१४॥

—कस्यापि

## अथ रौद्ररसः

५३४ देह्याज्ञां विञ्च राज्ञां कुलमुकुटमणे राम लङ्काधिनाथं
मथ्नीयां चास्त्र[2]पाथोनिधिमथ मरुतां प्रापये किन्तु[3] लङ्काम् ।
यद्वा मद्बाहुदण्डोद्यमितपृथुतरक्षोणिभृत्क्षेपभिद्य-
द्वक्षःसंक्षुब्धरक्षःकरनिकरकृतस्फारचीत्कारघोराम् ॥१५॥

—लक्ष्मणस्य

५३५ चञ्चद्भुजभ्रमितचण्डगदाभिघात-
सञ्चूर्णितोरुयुगलस्य सुयोधनस्य ।
स्त्यानावनद्धघनशोणितशोणपाणि-
रुत्तंसयिष्यति कचांस्तव देवि भीमः ॥१६॥

—नारायणस्य

५३६ केयं माता पिशाची क इव च जनको भ्रातरः केऽत्र कीटा
वध्योऽयं बन्धुवर्गः कुटिलविटसुहृच्चेष्टिता ज्ञातयोऽमी ।

---

१. क महीपाः । २. ख चा(वा)थ । ३. ख किन्तु ।

आगर्भं यावदेषां कुलमिदमखिलं नैव निःशेषयामि
स्फूर्जन्तः क्रोधवह्नेर्न दधति विरतिं तावदङ्गे[1] स्फुलिङ्गाः ॥१७॥

—कृष्णमिश्रस्य

५३७ क्रीडातुङ्गतुरङ्गटापपटलीखर्वीकृतोर्वीधर-
श्रेणिस्फूर्जितधूलिधोरणितमःस्तोमा[2]वलीढं जगत् ।
युद्धक्रुद्धकरीन्द्रवृन्दचरणव्याभुग्नभोगीश्वर-
व्यग्रोदग्रफणाग्ररत्नरुचिभिर्विद्योतयामः पुनः ॥१८॥

—भानुकरस्य

## अथ वीररसः

५३८ सङ्ग्रामाङ्गणमागते दशमुखे सौमित्रिणा विस्मितं
सुग्रीवेण विचिन्तितं हनुमता व्यालोलमालोकितम् ।
श्रीरामेण परन्तु पीनपुलकस्फूर्जत्प्रकोष्ठश्रिया
सान्द्रानन्दरसालसा निदधिरे बाणासने दृष्टयः ॥१९॥

—भानुकरस्य

## अथ भयानकरसः

५३९ स्फूर्जद्भुजाविंशतिकं समन्तात्समुल्लसद्भीषणवक्त्रपङ्क्तिम् ।
दृष्ट्वैव रौद्रं दशवक्त्रदेहं सीताऽतिभीता बत मूर्च्छिताऽऽसीत् ॥२०॥

—लक्ष्मणस्य

५४० किञ्चित्कोपकलाकलापकलनाहुङ्कार[3]दृप्यद्भ्रुवो-
र्विक्षेपादकरोदसौ रघुपतिर्लङ्कापतेः पत्तनम् ।
क्रन्दत्फेरु रटत्करेणु[4] विघटद्दारु[5] स्फुरद्[6]गुग्गुलु
प्रोत्क्रीडत्कपि निःश्वसत्फणि रणज्झिल्लि भ्रमद्द्वीपि[7] च ॥२१॥

—वररुचेः [मुरारेः]

---

१. *क ख* °देते । २. *का-मा* °तमःसोमा° । ३. *क ख* °हङ्कार° । ४. *का-मा* करी(रे)-द्रु । ५. *क ख* विदहद्दारु । ६. *ख* स्फुटद्° । ७. *का-मा* °मद्वापि ।

## अथ बीभत्सरसः

५४१ फेत्कारकृत्फेरुभिरङ्घ्रिजुष्टं श्वभिर्विलुब्धैरपि जग्धपृष्ठम्[1] ।
आ पक्षिभिर्भक्षितसर्वनासमासीद् वपुस्तद् दशकन्धरस्य ॥२२॥

—लक्ष्मणस्य

५४२ विकीर्णहरिचन्दनद्रविणि यत्र लीलालसा
निपेतुरतिचञ्चलाश्चतुरकामिनी दृष्टयः ।
तदेतदुपरिभ्रमन्निविडगृध्रजालं जनै-
र्लुठत्कृमि कलेवरं पिहितनासिकैर्वीक्ष्यते ॥२३॥

—इन्द्रकवेः

## अथाद्भुतरसः

५४३ विनिर्गतं मानदमात्ममन्दिराद् भवत्युपश्रुत्य यदृच्छयाऽपि यम् ।
ससम्भ्रमेन्द्रद्रुतपातितार्गला निमीलिताक्षीव भियाऽमरावती ॥२४॥

—कस्यापि

## अथाद्भुतपर्यवसानात्युक्तिः

५४४ आकाशदेशात्परिपातुकानि लङ्केशशीर्षाणि सकुन्तलानि ।
क्षणं नभःप्रांशुमहीरुहस्य शिक्याश्रितानीव फलानि रेजुः ॥२५॥

—लक्ष्मणस्य[2]

५४५ दिव्यहरेर्मुखकुहरे विस्तीर्णे पर्णति व्योम ।
चूर्णति चन्द्रः क्रमुकति कनकगिरिः खदिरसारति खरांशुः ॥२६॥

—भानुकरस्य[3]

---

१. ख रंध्रिधृष्टम् । २. ख एतदनन्तरं पद्यमिदमस्ति—
कोणः (?) केन जयन्ति दिव्यवपुषा किन्त्वस्य किं वर्ण्यतां
रोमाग्रे विलसन्ति यस्य परितो लिक्षोघवद्दिग्गजाः (?) ।
यस्य श्रोत्रमलभ्रमं वितनुते पाथोमुचां कन्दली
नेत्रे यस्य च दूषिकाभ्रममसौ धत्ते सुधादीधितिः ॥
३. क °स्यैते, ख °स्यैतौ ।

## अथ शान्तरसः[1]

५४६ नमस्तस्मै करालाय कालाय क्षुधितात्मने ।
जगन्ति भुञ्जतो[2] यस्य ब्रह्मग्रासोऽवधिर्भुजे[3] ॥२७॥

५४७ पुनः पुनर्भुवि क्षिप्तः पुनरेति स्वसन्निधिम् ।
मन्दकन्दुकवज्जातो मृत्योः क्रीडनकं नरः[4] ॥२८॥

५४८ जन्तुः संसारकान्तारे कालव्यालभयङ्करे ।
प्रविशन्नेव कोऽनेन नो नृशंसेन दंशितः ॥२९॥

५४९ नराः संसारकान्तारे विषयांश्चपलान् मृगान् ।
व्याधा इव प्रधावन्तो यान्ति व्याघ्रान्तकान्तिकम् ॥३०॥

२५० तरले जीवने जन्तुर्भोगान् भोक्तुं य ईहते ।
स नूनं तडिदुद्योते मणीन् ग्रथितुमीहते ॥३१॥

५५१ यः स्वोद्धाराय गृह्णाति मूढो यान् यान् परिग्रहान् !
सार्धं मज्जति तैः पङ्के मग्नेभाङ्घ्रिरिवेतरैः ॥३२॥

५५२ मायया कर्पिता ह्येते न चोह्य(ह्य)न्ते मिथ[5]स्तथा ।
पुनर्यथा न मुच्यन्ते तुर्येव पटतन्तवः ॥३३॥

५५३ भङ्गदं भङ्गुरं भोगं गत्वरं सत्वरं[6] धनम् ॥
भज मा भज मावासं तमीश्वरमनश्वरम् ॥३४॥

५५४ उद्यद्विवेकतपनप्रफुल्ले हृदयाम्बुजे ।
विशते[7] भगवद्भक्तिररविन्द इवेन्दिरा ॥३५॥

५५५ संसारतापदहनैः प्रतप्तायां मनोभुवि ।
सम्यग् रोहन्ति भगवद्भक्तिबीजाङ्कुरा इमे ॥३६॥

---

१. क ख शान्तो रसः । २. ख विश्वं भक्षयतो । ३. ख °र्भुजेः । ४. ख सञ्जातो मनुजो मृत्योर्मन्दः क्रीडनकन्दुकः । एतदनन्तरं पद्यमिदस्ति—
अशेषामेषाः सूनितासूरसूनुना (?) ।
मुग्धा जग्धाः परे बद्धा अर्दिताः मर्दिताः परे ॥
५. ख नह्यन्ते च मिथ° । ६. ख सत्वरं गत्वरं । ७. ख प्रविशेद् ।

५५६ उपरिस्था भक्तिरन्तर्निर्मूला तारयेत् कथम् ।
न हि भारक्षमा दृष्टा वारां सान्द्राऽपि नीलिका ॥३७॥

५५७ धर्मे सक्तिर्भवे भक्तिर्भवेऽरक्तिर्वरत्रयम् ।
चतुर्थपुरुषार्थाय चतुर्थं तीर्थवर्तनम् ॥३८॥

५५८ तन्मनस्विन् मनः स्वीयं दिक्पर्यटनलम्पटम् ।
दुर्मर्कटमिव क्षिप्रं स्थाणौ बद्धं[1] स्थिरीकुरु ॥३९॥

—एते लक्ष्मणस्य

५५९ व्याघ्रीव तिष्ठति जरा परितर्जयन्ती
रोगाश्च शत्रव इव प्रहरन्ति नित्यम् ।
आयुः परिस्रवति भिन्नघटादिवाम्भो
लोकस्तथाप्यहितमाचरतीति चित्रम् ॥४०॥

५६० यावत्स्वस्थमिदं शरीरमरुजं यावज्जरा दूरतो
यावच्चेन्द्रियशक्तिरप्रतिहता यावत्क्षयो नायुषः ।
आत्म[2]श्रेयसि तावदेव विदुषा कार्यः प्रयत्नो महान्
संदीप्ते भवने तु कूपखननं प्रत्युद्यमः कीदृशः ॥४१॥

५६१ उत्खातं निधिशङ्कया क्षितितलं ध्माता गिरेर्धातवो
निस्तीर्णः सरितां पतिर्नृपतयो यत्नेन सन्तोषिताः[3] ।
मन्त्राराधनतत्परेण मनसा नीताः श्मशाने निशाः[4]
प्राप्तः काणवराटकोऽपि न मया तृष्णेऽधुना मुञ्च माम् ॥४२॥

५६२ अग्रे गीतं सरसकवयः पार्श्वतो दाक्षिणात्याः
पृष्ठे लीलावलयरणितं चामरग्राहिणीनाम् ।
यद्यस्त्येवं कुरु भवरसास्वादने लम्पटत्वं
नो चेच्चेतः प्रविश सहसा निर्विकल्पे समाधौ ॥४३॥

५६३ अश्नी[5]महि वयं भिक्षामाशावासो वसीमहि ।
शयीमहि महीपृष्ठे कुर्वीमहि किमीश्वरैः ॥४४॥

—भर्तृहरेरेते

१. ख दुर्मर्कटनिभं रुध्वा स्थाणौ बद्ध्वा । २. क ख स्वीय° । ३. क ख चाराधिताः ।
४. क ख क्षपाः । ५. ख अशी° ।

५६४ बन्धुव्रजैः सुभटकोटिभिराप्तवर्गै-
र्मन्त्रास्त्रतन्त्रविधिभिः परिरक्ष्यमाणः।
जन्तुर्बलादधिबलोपकृतान्तदूतै-
रानीयतेऽयमवशाय वराक एषः ॥४५॥

५६५ दैवाद्धनेष्वधिगतेषु पटुर्न कायः
काये पटौ न पुनरायदवाप्ति वित्तम्[1]।
इत्थं परस्परहतात्मभिरात्मधर्मै-
र्लोकं सुदुःखयति जन्मकरः प्रबन्धः ॥४६॥

५६६ आस्तां भवान्तरविधौ सुविपर्ययोऽय-
मत्रैव जन्मनि नृणामधरोच्चभावः।
अल्पः पृथुः पृथुरपि क्षणतोऽल्प एव
स्वामी भवत्यनुचरः स च तत्पदार्हः ॥४७॥

५६७ एकत्वमावहसि[2] जन्मनि संक्षये च
भोक्तुं स्वयं स्वकृतकर्मफलानुबन्धम्।
अन्यो न जातु सुखदुःखविधौ सहायः
स्वाजीवनाय मिलितं विटपेटकं ते[3] ॥४८॥

५६८ बाह्यः परिग्रहविधिस्तव दूरमास्तां
देहोऽयमेति न समं सहसम्भवोऽपि।
किं ताम्यसि त्वमनिशं क्षणदृष्टनष्टै-
र्दारात्मजद्रविणमन्दिरमोहपाशैः ॥४९॥

५६९ संशोच्य शोकविदसौ दिवसं तमेक-
मन्येद्युरादरपरः स्वजनस्तव स्वे।
कायोऽपि भस्म भवति प्रचयार्चिषाग्नेः[4]
संसारयन्त्रघटना[5]घटने त्वमेकः ॥५०॥[6]

—एते सोमदेवस्य

---

१. ख पुनरायुरवाप्तवित्तम्। २. ख °माविशसि। ३. ख °मिनितं विटपेटके ते(मे)।
४. ख °च्चितग्नेः। ५. क ख °घटिका°। ६. क ख एतदनन्तरं पद्यमिदमस्ति—

५७० केनाप्यनर्थरुचिना कपटं प्रयुक्त-
मेतत्सुहृत्स्वजनबन्धुमयं विचित्रम् ।
कस्यात्र कः परिजनः स्वजनो जनो वा
स्वप्नेन्द्रजालसदृशः खलु जीवलोकः ॥५१॥

५७१ बीभत्सा विषया जुगुप्सिततमः कायो वयो गत्वरं
प्रायो बन्धुभिरध्वनीव पथिकैर्योगो वियोगावहः ।
हातव्योऽयमसार एष विरसः[1] संसार इत्यादिकं
सर्वस्यैव हि वाचि चेतसि पुनः कस्यापि पुण्यात्मनः ॥५२॥

५७२ आत्मज्ञानविवेकनिर्मलधियः कुर्वन्त्यहो दुष्करं[2]
यन्मुञ्चन्त्युप[3]भोगभाञ्ज्यपि धनान्येकान्ततो निस्पृहाः ।
न प्राप्तानि पुरा न सम्प्रति न च प्राप्तो[4] दृढः प्रत्ययो[5]
वाञ्छामोऽत्र[6] परिग्रहाण्यपि वयं त्यक्तुं न तानि क्षमाः ॥५३॥

५७३ अजानन् दाहार्तिं विशति शलभो दीपदहनं
न मीनोऽपि ज्ञात्वा वृतबडिशमश्नाति पिशितम् ।
विजानन्तोऽप्येतान् वयमिह विपज्जालजटिलान्
न मुञ्चामः कामानहह गहनो मोहमहिमा ॥५४॥

५७४ क्षान्तं न क्षमया गृहोचितसुखं त्यक्तं न सन्तोषतः
सोढा दुःसहशीतवाततपनक्लेशा न तप्तं तपः ।
ध्यातं वित्तमहर्निशं नियमितप्राणैर्न शम्भोः पदं[7]
तत्तत् कर्म कृतं यदेव मुनिभिस्तैस्तैः फलैर्वञ्चितम् ॥५५॥

५७५ जन्मेदं वन्ध्यतां नीतं भवभोगोपलिप्सया ।
काचमूल्येन विक्रीतो हन्त चिन्तामणिर्मया ॥५६॥

---

योषिद्भिरादृतकरं कृतमण्डनश्री-
र्यः कामचामररुचिस्तव केशपाशः ।
सोऽयं त्वयि श्रवणगोचरतां प्रयाते
प्रेतावनीषु वनवायसवासगोऽभूत् ॥

१. क ख विदुषा । २. ख दुष्कृतं । ३. ग °न्त्यप° । ४. ख ग प्राप्तो । ५. क दृढप्रत्ययो ग °त्ययौ । ६. ख ग वाञ्छामात्र° । ७. क ख ग न च पुनर्विष्णोः पदं शाश्वतं ।

५७६ कामं वनेषु हरिणास्तृणेन जीवन्त्ययत्नसुलभेन ।
धनिषु न दैन्यं विदधति ते खलु[1] पशवो वयं सुधियः ॥५७॥

५७७ महता पुण्यपण्येन क्रीतेयं कायनौस्त्वया ।
पारं दुःखाम्बुधेर्गन्तुं तर यावन्न भिद्यते ॥५८॥

५७८ उपशमफलाद् विद्याबीजात्फलं धनमिच्छतां
भवति विफलो यत्प्रारम्भस्तदत्र किमद्भुतम् ।
नियतविषया ह्येते भावा नयन्ति[2] विपर्ययं[3]
जनयति यतः शालेर्बीजं न यातु जवाङ्कुरम् ॥५९॥

५७९ स्थूलप्रावरणोऽतिवृत्तकथनः कासाश्रुलालाविलो
भग्नोरःकटिपृष्ठजानुजघनो[4] मुग्धोऽतिथीन् वारयन् ।
शृण्वन् धृष्टवधूवचांसि धनुषा संत्रासयन् वायसा
नाशापाशनिवद्धजीवविभवो[5] वृद्धो गृहे ग्लायति ॥६०॥

—एते सिल्हण[6]शतकात्

५८० मृत्योर्बिभेषि किं मूढ भीतं मुञ्चति किं यमः[7] ।
अजातं नैव गृह्णाति कुरु यत्नमजन्मनि[8] ॥६१॥

५८१ अहौ वा हारे वा वलवति रिपौ वा सुहृदि वा
मणौ वा लोष्टे वा कुसुमशयने वा दृषदि वा ।
तृणे वा स्त्रैणे वा मम समदृशो यान्तु[9] दिवसाः
क्वचित्पुण्यारण्ये[10] शिव शिव शिवेति प्रलपतः ॥६२॥

—श्रीभर्तृहरेः[11]

५८२ [12]स वेदो निर्वेदः स्मृतिरपि च सा विस्मृतिरहो
स शास्त्रार्थो व्यर्थस्तदपि यजनं मोहभंजनम् ।

---

१. क ख ग विदधति धनिषु न दैन्यं ते किल । २. ख ग न यान्ति । ३. ग विपर्यासं(?) । ४. क ख °दशनो । ५. जीवटभवे । ६. का-मा बिल्हण° । ७. क ख ग धीर मृत्युर्भीतं न मुञ्चति । ८. क ग °मजन्मने । ९. ग तु सदृशो यान्ति । १०. ख पुण्येऽरण्ये । ११. क ख ग 'श्रीभर्तृहरेः' इति नास्ति । १२. ख ग किञ्चिदेवं लिखतः---स वेदो निर्वेदस्मृतिपण्डितैरतिजडस्य सम्भावनमसौ तदधुना मनाक् हसति हत तानु (ख हतान्) पण्डितान् (?) । लक्ष्मणस्य ।

स तूहः प्रत्यूहो हरिहरकथा सा च वितथा
न यत्र स्यादात्मस्फु[1]रदनुभवः प्रत्ययमयः ॥९३॥

—केषामप्येतौ[2]

५८३ कल्पद्रुमोऽपि कालेन भवेद् यदि फलप्रदः ।
को विशेषस्तदा तस्य वन्यैरन्यमहीरुहैः ॥९४॥[3]

५८४ स्थाणोः पदं चिन्तयतश्चिरेण स्थाणोर्भ्रमान्मच्छिरसि स्थिता स्यात् ।
शकुन्तिका कापि निधाय पोतान् विधाय नीडं निविडं कदा वा ॥९५॥[4]

५८५ कुचौ तु परिचर्चितौ[5] परिचितं चिरं चन्दनं
कृताः परमुरोजयोः परिसरेऽरविन्द[6]स्रजः ।
स्तुतिर्नतिरपि स्मृतिर्वरतनोः कृतैवादरा-
दिदं तु निखिलं मया विरचितं पुनर्नेश्वरे[7] ॥९६॥

५८६ चिरं ध्याता रामा क्षणमपि च रामप्रतिकृतिः
परं पीतं रामाधरमधु[8] न रामाङ्घ्रिसलिलम् ।
नता रुष्टा रामा यदरचि न रामाय विनति-
र्गतं मे जन्माग्र्यं न दशरथजन्मा परिगतः ॥९७॥

—एते लक्ष्मणस्य[9]

५८७ पुत्रमन्दिरकलत्रमेदुरं मे दुरन्तमिव भासितं[10] जगत् ।
तन्निवेदय दयामनोहरं नो हरं स्मरसि चेतसा कुतः ॥९८॥

—भानुकरस्य

५८८ निधानमानन्दनिधेरिदानीं चिदां निदानं भज वा भवानीम् ।
कर्पूरगौरं भज शूलिनं वा नीलाम्बु[11]दाभं वनमालिनं वा ॥९९॥

—लक्ष्मणस्य

इति श्री आक्कोलकरलक्ष्मणभट्टकृतौ[12] पद्यरचनायां त्रयोदशो व्यापारः ।

● ● ●

१. ख स्यादात्मा स्फु° । २. ख केषामपि । ३. ख ग पद्यमिदं नास्ति । ४. का-मा पद्यमिदमेवं मुद्रितम्···माणी भ्रमान् मद्विरहे स्थिता स्यात् । शाकुन्तिका क्वापि (ख कापि) मिथोऽश्च पोतान् वि । ५. क ख ग °चर्चितुं । ६. ग °रविन्द इति लिखित्वा 'सरोज' इति संशोधितम् । ७. ख ग पुनर्विरचितं मया नेश्वरे । ८. ख ग °धर इव । ९. ग लक्ष्मणस्यैते । १०. क भासि(स)ते, ख ग भासते । ११. ग नवाम्बु । १२. ख ग °भट्टविरचितायां ।

## चतुर्दशो व्यापारः

५८९ चिरं बुद्ध्या विरचितान् कविभिः कविनायकाः ।
धन्यानन्यापदेशांस्तानाकर्णयत वर्णशः ॥१॥

अथ कल्पद्रुमः[1]

५९० विवेकविधुरं किलानुचितमेव कल्पद्रुम
द्रुमाधिप कृतं त्वया वितरणैकचेतस्तया ।
समं वदति[2] पण्डितैरतिजडस्य सम्भावना-
मसौ[3] तदधुना मनाग् हसति हन्त तान् पण्डितान् ॥२॥

— लक्ष्मणस्य

५९१ कल्पद्रुमोऽपि कालेन भवेद् यदि फलप्रदः ।
को विशेषस्तदा तस्य वन्यैरन्यैर्महीरुहैः ॥३॥

—कस्यापि

अथ चम्पकः

५९२ साधारणतरुबुद्ध्या न मया बद्धस्तवालवालोऽपि[4] ।
लज्जयसि मामिदानीं चम्पक भुवनाधिवासिभिः कुसुमैः ॥४॥

५९३ भ्रमन् वनान्ते नवमञ्जरीषु न षट्पदो गन्धफलीमजिघ्रत् ।
सा किं न रम्या स च किं न रन्ता बलीयसी केवलमीश्वरेच्छा ॥५॥

५९४ कोयं चम्पक मुञ्च याचकजनैरायासितत्वं सखे
मा म्लासीः परितो विलोकय तरुः कस्तेऽधिरूढस्तुलाम् ।

---

१. क °द्रुमान्योपदेशः । २. ख यदति । ३. ख °भावनादसौ । ४. क ख बद्धं तवालवालं तु ।

कोपश्चेन्नियतस्तवास्ति हृदये धात्रे तदा कुप्यतां
येन त्वं हि सुवर्णवर्णकुसुमामोदोऽद्वितीयः कृतः ॥६॥[1]

अथ केसरतरुः

५९५ नावर्जितोऽसि तरुणीकरपल्लवेन
सिक्तोऽसि नेन्दुवदनावदनासवेन ।
कुग्रामपामरनिकेतनसन्निधाने
केनेह केसरतरो बत रोपितोऽसि ॥७॥

अथागुरुः

५९६ एणाद्याः पशवः किरातपरिषन्नैषा गुणग्राहिणी
सञ्चारोऽस्ति न[2] नागरस्य विषयोच्छिन्नं मुनीनां मनः ।
धूमेनात्र[3] सुगन्धिनाऽत्र विपिने दिक्चक्रमामो[4]द्य-
न्नामूलं परिदह्यतेऽगुरुतरुः कस्मै किमाचक्ष्महे ॥८॥[5]

५९७ आपत्स्वेव हि महतां शक्तिरभिव्यज्यते न सम्पत्सु ।
अगुरोस्तथा न गन्धः प्रागस्ति यथाऽग्निपतितस्य ॥९॥

—केषामप्येते

अथाम्रः

५९८ रे रे रसालतरुसार वचोऽत्रधेहि
वासन्तिकीं स्वफलपल्लवपुष्पलक्ष्मीम् ।
तावद् विकस्वरपिकद्विजसात्कुरु द्राङ्
न व्यग्रितोऽसि कलभैः शलभैश्च यावत् ॥१०॥

५९९ यद्यध्वनीन चिरमध्वनि धर्मखिन्नः
कासारतीररुहमाश्रय नम्रमाम्रम् ।
छायां न केवलमितः श्रमिता लभन्ते
कामं पचेलिमफलं विमलं जलञ्च ॥११॥

—भोजप्रबन्धात्[6]

१. ख पद्यमिदं नास्ति । २. ख °चारो न हि । ३. ख °नापि । ४. क ख °न्धिना वश दिशः सानन्दमामो° । ५. ख एतदनन्तरं 'केषामपि' इत्यस्ति । ६. क 'भोजप्रबन्धात्' इति नास्ति । ख द्वौ लक्ष्मणस्य ।

६०० न तादृक् कर्पूरे न च मलयजे नो मृगमदे
फले वा पुष्पे वा तव मिलति यादृक् परिमलः ।
परं त्वेको दोषस्त्वयि खलु रसाले यदधिकः
पिके वा काके वा गुरुलघुविशेषं न मनुषे[1] ॥१२॥

—एते लक्ष्मणस्य

## अथ द्राक्षा

६०१ दासेरकस्य दासीयं बदरी यदि रोचते[2] ।
एतावतैव किं द्राक्षा न साक्षादमृतास्पदम् ॥१३॥

६०२ यद्यपि न भवति हानिः परकीयां चरति रासभो[3] द्राक्षाम् ।
असमञ्जसमिति मत्वा तथापि परि[4]खिद्यते चेतः ॥१४॥

—कयोरपि[5]

## अथ पलाशः

६०३ किंशुके शुक मा तिष्ठ भाविमृष्टफला[6]शया ।
बाह्यरङ्गप्रसङ्गेन के के नानेन वञ्चिताः ॥१५॥

—कस्यापि[7]

६०४ उपनद[8]पुलिने महापलाशः पवनसमुच्चल[9]देकपत्रपाणिः ।
दवदहनविनष्टजीवितानां सलिलमिवैष ददाति पादपानाम् ॥१६॥

—भोजप्रबन्धात्

## अथ तालः

६०५ त्वमध्वनीनाध्वनि तालशालच्छायामिमां हस्त[10]मितां श्रितोऽसि ।
छायाफलेना[11]प्यतुलं फलञ्चेत्पतेच्छिरस्ते दलितं वृथा स्यात् ॥१७॥

—लक्ष्मणस्य

---

१. क कुरुषे । ख पद्यमिदं नास्ति । २. क सेवते । ३. क रासभे । ४. क ख खलु । ५. ग कस्याप्येतौ । ६. क ख ग मिष्टभावि (क व°) फला° । ७. ख केषामपि । ८. ख ग °नदि । ९. ख ग °समुच्छल° । १०. ग ताल° । ११. ख छायाफलं ना° ।

## अथ वृन्तः

६०६ कश्चिन्नवं पल्लवमादधाति[1] कश्चित्प्रसूनानि फलानि कश्चित् ।
परं करालेऽस्य निदाघकाले मूले न दाता सलिलस्य कश्चित् ॥१८॥

—लक्ष्मणस्य

६०७ भुक्तानि यैस्तव फलानि पचेलिमानि
क्रोडस्थितैरहह वीतभयैः प्रसुप्तम् ।
ते पक्षिणो जलरयेण[2] विकृष्यमाणं
पश्यन्ति पादप भवन्तममी तटस्थाः ॥१९॥

—महादेवस्य

६०८ किं जातोऽसि चतुष्पथे घनतरं छन्नोऽसि किं छायया
छन्नश्चेत् फलितोऽसि किं फलभरैराढ्योऽसि किं सन्नतः[3] ।
हे सद्वृक्ष सहस्व सम्प्रति सखे शाखाशिखाकर्षण-
क्षोभामोटन[4]भञ्जनानि जनतः स्वैरेव दुश्चेष्टितैः ॥२०॥

—कस्यापि

६०९ इयं बाला वल्लीं मृदुकिसलयं तापविलयं
घनच्छायं शालं नवमतिविशालं परिगता ।
परं त्वस्याभ्यन्तर्गरललवभ[5]स्मीकृतवनं
भुजङ्गं प्रोत्तुङ्गं कथमिव वराकी कलयतु ॥२१॥

—लक्ष्मणस्य

## अथ कमलिनी

६१० विधौ पुरस्थेऽपि निधौ कलानामुद्यत्करेऽपि द्विजराजनाम्नि ।
किं पद्मिनी हाटक[6]वच्चकार वराटकी[7]नामपि गोपनानि ॥२२॥

---

१. क ख ग °ददाति । २. क °रवेण । ३. क ख ग °र्नम्रोऽसि किं वा पुनः ।
४. ख ग क्षोभोन्मो° । ५. क ख ग °भ्यन्तर्बत गरलभ° । ६. का मा हारक° ।
७. ख ग °टका° ।

६११ रे पद्मिनीपत्र भवच्चरित्रं चित्रं प्रतीमो वयमत्र किञ्चित् ।
त्वं पङ्कजन्माऽपि यदृच्छभावादपि स्पृशस्यम्बु न पङ्कसङ्गि ॥२३॥

—द्वौ लक्ष्मणस्य[1]

## अथ कुमुद्वती

६१२ अपि[2] त्वया कैरविणि व्यधायि मुधा सुधाबन्धुनि[3] बन्धुभावः ।
जनापवादः परितः प्रयातः समागमो हन्त न जातु जातः ॥२४॥

—कस्यापि[4]

६१३ जनिः सरोऽङ्कादतिपङ्किनो यद् यल्लोलुपैर्वा मधुपैर्विहारः ।
कलङ्क एवैष कुमुद्वतीनां कलङ्किनः किन्तु[5] कलावतीनाम् ॥२५॥

—लक्ष्मणस्य

## अथ भृङ्गः

६१४ अन्यासु तावदुपमर्दसहासु भृङ्ग
लोलं विनोदय मनः सुमनोलतासु ।
मुग्धामजातरजसं कलिकामकाले
बालां कदर्थयसि किं नवमल्लिकायाः ॥२६॥

—विकटनितम्बायाः

६१५ मदनमवलोक्य निष्फलमनित्यतां बन्धुजीवकुसुमानाम् ।
वनमुपगम्य भ्रमरः सम्प्रति जातो जपासक्तः ॥२७॥

—कस्यापि

६१६ कियद्वारं द्वारस्थित[6]मधुकरैः पद्मसदने
त्वमद्धा रुद्धोऽसि द्रुतमिति निषिद्धोऽस्यपसर ।

---

१. ख ग 'लक्ष्मणस्यैतौ' इति लिखित्वा पद्यमिदं लिखितम्—
निरर्थकं जन्म गतं नलिन्या यया न दृष्टं तुहिनांशुबिम्बम् ।
उत्पत्तिरिन्दोरपि निष्फलैव दृष्टा प्रबुद्धा नलिनी न येन ॥

२. ख अयि । ३. ख °धामनि । ४. ख कयोरपि । ५. क ख किन्नु । ६. का मा वारस्थि° ।

हठादन्तर्गत्वा पिबसि मकरन्दं च मधुलिट्
मिषन्तस्तिष्ठामो वयमिह दुराशानियमिनः[1] ॥२८॥

६१७ आलिङ्गसे चारुलतां लवङ्गीमाचुम्बसे चाम्बुजिनीं क्रमेण ।
तां चूतवल्लीं मधुप प्रकामं सन्ताडयस्येव पदैः किमेतत् ॥२९॥

—एतौ लक्ष्मणस्य[2]

६१८ स्वामोदवासितसमग्रदिगन्तराला
रक्ता मनोहरशिखा सुकुमारमूर्तिः ।
सेव्या सरोजकलिका तु यदैव जाता
नीतस्तदैव विधिना मधुपोऽन्यदेशम् ॥३०॥

६१९ अपसर मधुकर दूरं परिमलबहुले[3]ऽपि केतकीकुसुमे ।
इह नहि मधुलवलाभो भवति परं धूलिधूसरं वदनम् ॥३१॥

—कस्यापि[4]

६२० सानन्दमेष मकरन्दमिहारविन्दे
विन्देत षट्पदयुवेति जनैरटङ्कि ।
दैवादकाण्डपरिमुद्रितपुण्डरीक-
कोषाद[5]भूदहह निःसरणं पुमर्थः ॥३२॥

—रामचन्द्रस्य

## अथ पिकः[6]

६२१ किं कोमलैः कलरवैः पिक तिष्ठ तूष्णी-
मेते तु पामरनराः स्वरमाकलय्य ।
को वा रटत्ययमये निकटे कटूनि
रे वध्यतामिति वदन्ति गृहीतदण्डाः ॥३३॥

—लक्ष्मणस्य

६२२ शृगालशशशार्दूलदूषितं दण्डकावनम् ।
पञ्चमं गायताऽनेन कोकिलेन प्रतिष्ठितम् ॥३४॥

—भानुकरस्य

---

१. ख ग °मिताः । २. ख द्वौ लक्ष्मणस्य, ग लक्ष्मणस्यैतौ । ३. ख °बहले । ४. ख केशवपि, ग कस्याप्येतौ । ५. ख कोशाद° । ६. ख 'अथ पिकः' इति नास्ति ।

## अथ चातकः

६२३ ऊर्ध्वीकृतग्रीवमहो मुधैव किं याचसे चातकपोत मेघम् ।
अत्यूर्जितं गर्जितमात्रमस्मिन्नम्भोधरे बिन्दुलवस्तु दूरम्[1] ॥३५॥

—लक्ष्मणस्य

६२४ एक एव खगो मानी चिरं जीवतु चातकः ।
म्रियते वा पिपासायां[2] याचते वा पुरन्दरम् ॥३६॥

—कस्यापि[3]

## अथ शुकः

६२५ सुभाषितस्याध्ययनेऽ[4]नुषक्तं शुकं वराकाः प्रहसन्ति काकाः ।
तमेव संसत्सु गिरं किरन्तं दृष्ट्वा भवन्ति त्रपया नतास्याः ॥३७॥

६२६ अमुष्मिन्नारामे तरुभिरभिरामे विटपिनः
स्फुटं नृत्यद्भृङ्गीविविधनवसङ्गीतकलनात् ।
परानन्दैः पूर्णाः क इव तव वर्णावलिपद-
क्रमश्रोता वेत्ता द्विजवर शुक श्राम्यसि कुतः ॥३८॥

—द्वौ लक्ष्मणस्य[5]

६२७ इयं पल्ली[6] भिल्लैरनुचितसमारम्भरसिकैः
समन्तादाक्रान्ता विषविषमबाणप्रणयिभिः ।
तरोरस्य स्कन्धे गमय समयं कीर निभृतं
न वाणी कल्याणी तदिह मुखमुद्रैव शरणम् ॥३९॥

—भर्तृहरेः

६२८ द्राक्षां प्रदेहि मधु वा वदने निधेहि
देहे विधेहि किमु वा करलालनानि ।

---

१. ख ग दूरे । २. ख ग पिपासया वा म्रियते । ३. ख 'कस्यापि' इति नास्ति । इतः परं पद्यमिदमस्ति—

के वा न सन्ति भुवि तामरसावतंसा हंसावलीवलयिता जलसंनिवेशाः ।
कोऽप्याग्रहो ग्रहवनः (?) खलु चातकस्य पौरन्दरीं यदभिवाञ्छति वारिधाराम् ॥

—कयोरपि

४. ख ग °ध्ययनानु° । ५. ग लक्ष्मणयंतौ । ६. ग वल्ली ।

जातिस्वभावचपलः पुनरेष कीर-
स्तत्रैव यास्यति कृशोदरि मुक्तबन्धः ॥४०॥

—कस्यापि

अथ हंसः[1]

६२९ हा हन्त मानससरःसलिलावतंस
रे राजहंस पयसोः प्रविवेचनाय ।
चेच्छक्तिमान् खलु भवान्न तदा किमु स्यात्
किं वा कपोत उत वा कलविङ्कपोतः ॥४१॥

— लक्ष्मणस्य

६३० हंसी वेत्ति परागपिञ्जरतनुः कुत्रापि पद्माकरे
प्रेयान्मे विसकन्दलीकिसलयं भुङ्क्ते स्वयं[2] निर्वृतः ।
नो जानाति तपस्विनी यदनिशं[3] जम्बालमालोडय-
ञ्शैवालाङ्कुरमप्यसौ न लभते हंसो विशीर्णच्छदः ॥४२॥

—कस्यापि

अथ समुद्रः

६३१ निष्पीतपीनतिमिराणि मनोहराणि
रत्नानि सन्ति न कियन्ति तवान्तिकेषु ।
एतस्य कौस्तुभमणेर्व्रजतः परन्तु
पाथोनिधे स्मरणमान्तरमावहेथाः ॥४३॥

६३२ त्वमद्य सिन्धो जगदेकवन्धो रत्नानि दातुं विमुखोऽसि कस्मात् ।
किं वा[4] सुतः कल्पमहीरुहस्ते दानैः कृतार्थीकुरुते जगन्ति ॥४४॥

—भानुकरस्यैतौ

६३३ पीत्वा गर्जन्त्यपस्ते दिशि दिशि जलदास्त्वं शरण्यो गिरीणां
सुत्रामत्रासभाजां त्रिदशविटपिनां जन्मभूमिस्त्वमेव ।

१. *ख ग* राजहंसः । २. *क ख* स्वयं *ग,* °लीष्कवलयन्नास्ते स्वयं । ३. *ग* पुनरसौ ।
४. *ख* अयं ।

गाम्भीर्यं तच्च तादृक् तव सलिलनिधे किन्तु विज्ञाप्यमेतत्[1]
सर्वोपायेन मैत्रावरुणिमुनिकृपादृष्टयः[2] काङ्क्षणीयाः ॥४५॥

—हरिहरस्य[3]

६३४ रत्नैरापूरितस्यापि मदलेशोऽस्ति नाम्बुधेः ।
मुक्ताः कतिपयाः प्राप्य मातङ्गा मदविह्वलाः ॥४६॥[4]

६३५ स्वस्त्यस्तु विद्रुमवनाय नमो मणिभ्यः
कल्याणिनी भवतु मौक्तिकशुक्तिमाला ।
प्राप्तं मया सकल[5]मेव फलं पयोधे-
र्यद्दारुणैर्जलचरैर्न विदारितोऽस्मि ॥४७॥

—कयोरपि[6]

## अथ तडागः

६३६ क्रौञ्चः क्रीडतु कूर्दताञ्च कुररः कङ्कः परिष्वज्यतां[7]
मद्गुर्मा[8]द्यतु सारसश्च रसतु प्रोड्डीयतां टिट्टिभः ।
भेकाः सन्तु वका वसन्तु चरतु स्वच्छन्दमाटिस्तटे
हं हो पद्मसरः कुतः कतिपयैर्हंसैर्विना श्रीस्तव ॥४८॥

—कस्यापि

६३७ भ्रमरैर्गतं मधुकरैश्चलितं प्रकरैः प्रयातमपि पद्मदशाम्[9] ।
विभवे गते सकलमेव गतं ध्रुवमेकमञ्चति यशः सरसीम्[10] ॥४९॥

—भानुकरस्य

## अथ गिरिनिर्झरः

६३८ कल्लोलसञ्चलदगाधजलैरलोलैः
कल्लोलिनीपरिवृढैः किमपेयतोयैः ।
जीयात् स जर्जरतनुर्गिरिनिर्झरोऽयं
यद्विप्रुषाऽपि तृषिता वितृषा[11] भवन्ति ॥५०॥

---

१. ख ग °प्यसे हे । २. क °वृष्टयः । ३. ग °हरभट्टस्य । ४. ख पद्यमिदं नास्ति ।
५. ग निखिल° । ६. ग कस्याप्येतौ । ७. ख कङ्को विशङ्कोऽस्तु वा । ८. ख माद्गुर्मा° ।
९. ख °दशाम् । १०. क ख ग सरसः । ११. ख ग वितृषो ।

६३९ यद्वैभवाय निजवारिणि वारि सिन्धोः
क्षारं विमिश्रयसि निर्झर तद् वृथैव ।
धिग् वैभवं तु तदमी तृषितास्तवैव
नीराय हन्त मधुराय करं किरन्ति ॥५१॥

—द्वौ लक्ष्मणस्य

अथ जलम्

६४० शैत्यं नाम गुणस्तवैव सहजः[1] स्वाभाविकी स्वच्छता
किं ब्रूमः शुचितां भवन्ति[2] शुचयः स्पर्शेन यस्यापरे ।
किञ्चातः परमस्ति ते स्तुतिपदं यज्जीवनं देहिनां[3]
त्वञ्चेन्नीचपथेन गच्छसि पयः[4] कस्त्वां निरोद्धुं क्षमः ॥५२॥

—कस्यापि

अथ कूपः

६४१ यद्यपि बहुगुणगम्यं जीवनमेतस्य कूपमुख्यस्य ।
जयति तथापि विवेको दानं पात्रानुमानेन[5] ॥५३॥

—भोजदेवस्य

६४२ सगुणैः सेवितोपान्तो विनतैः प्राप्तदर्शनः ।
नीचोऽपि कूपः सत्पात्रैर्जीवनार्थं समाश्रितः ॥५४॥

—शार्ङ्गधरस्य

अथ महीधरः

६४३ किं तेन हेमगिरिणा रजताद्रिणा वा
यत्राश्रिता हि[6] तरवस्तरवस्त एव ।
मन्यामहे मलयमेव यदाश्रयेण
शाखोटनिम्बकुटजा अपि चन्दनानि[7] ॥५५॥

---

१. क ख ग तदनु । २. ख भजन्ति, ग व्रजन्त्य° । ३. क ख ग यज्जीविनां जीवनं । ४. क ख पुनः । ५. ख पात्रमानेन । ६. क °श्रिताश्च, ख यत्र स्थिताश्च । ७. क ख ग °न्दनाः स्युः ।

६४४ रोहणा[1]चल शैलेषु कस्तुलां कलयेत्तव ।
यस्य पाषाणखण्डानि मण्डनानि महीभृताम् ॥५६॥

—कयोरपि[2]

## अथ केसरी[3]

६४५ कुरङ्गीणां यूथं निभृतमिदमङ्गीकृतमयं[4]
निरातङ्को यस्मि[5]र्दयहृदयभावोऽर्दयतु तत्[6] ।
निवेद्यो वा कस्मिन्नयमविनयः केसरियुवा[7]
हठान्मत्ते[8]भानां युवतिषु विधत्ते नखपदम् ॥५७॥

—लक्ष्मणस्य

६४६ अन्तर्बलान्यहममुष्य मृगाधिपस्य
वाचा निवेद्य[9] कथमद्य लघूकरोमि ।
जानन्ति किन्तु करजक्षतकुम्भिकुम्भ-
निर्मुक्तमौक्तिकमयानि वनान्तराणि ॥५८॥

—कस्यापि

६४७ स्तन्यं जातो न जग्राह कण्ठीरवकिशोरकः ।
चक्षुर्व्यापारयामास कुञ्जे कुञ्जरशालिनि ॥५९॥

—भानुकरस्य

६४८ क्षुत्क्षामोऽपि जराकृशोऽपि शिथिलप्रायोऽपि कष्टां दशा-
मापन्नोऽपि विपन्नधीधृतिरपि प्राणेषु गच्छत्स्वपि ।
मत्तेभेन्द्रविभिन्नकुम्भपिशितग्रासैकवद्धस्पृहः
किं जीर्णं तृणमत्ति मानमहतामग्रेसरः केसरी ॥६०॥[10]

६४९ सिंहः शिशुरपि निपतति मदमलिनकपोलभित्तिषु गजेषु ।
प्रकृतिरियं सत्त्ववतां न खलु वयस्तेजसो हेतुः ॥६१॥[11]

—भर्तृहरेः

---

१. *ग* रोहिणा° । २. *ग* कस्याप्येतौ । ३. *ख* 'अथ केसरी' इति नास्ति । ४. *क* कृतभयं, *ख* दलयति यदङ्गीकृतभयं । ५. *ख* °स्तस्मि° । ६. *ख* °भावो दलयतु । ७. *ख* तदेतस्यावद्यं क्व नु खलु निगद्यं मृगपतेः । ८. *ख* स यन्मत्ते° । ९. निगद्य । १०. *ख ग* पद्यमिदं नास्ति । ११. *ख ग* पद्यमिदं नास्ति ।

अथ गजः

६५० क्रीडाऽकारि तडागवारिणि गतातङ्कं न पङ्केरुहै-
र्वल्ली काचन शल्लकीतरुगता नाकर्षिता हर्षतः ।
नाश्लिष्टा[1] करिणी करेण करिणा कामातुरेणामुना
दंष्ट्राभिर्विकटाननः शिव शिव व्यालोकि पञ्चाननः ॥६२॥

—लक्ष्मणस्य

६५१ केलिं कुरुष्व परिभुङ्क्ष्व सरोरुहाणि
गाहस्व शैलतटनिर्झरिणीपयांसि ।
भावानुरक्तकरिणीकरलालिताङ्ग
मातङ्ग मुञ्च मृगराजरणा[2]भिलाषम् ॥६३॥

—आनन्दवर्धनस्य

६५२ कौपे पयसि लघीयसि तापेन करः[3] प्रसारितः करिणा ।
सोऽपि न पयसा लिप्तो लाघवमात्मा परं नीतः ॥६४॥

६५३ दानार्थिनो मधुकरा यदि कर्णतालै-
र्दूरीकृताः करिवरेण मदान्धबुद्ध्या ।
तस्यैव गण्डयुगमण्डनहानिरेषा
भृङ्गाः पुनर्विकचपद्मवने चरन्ति ॥६५॥

—कयोरपि[4]

६५४ निषेवन्तामेते वृषमहिषमेषाश्वहरिणा,
गृहाणि क्षुद्राणां कतिपयतृणैरेव सुखिनः ।
गजानामास्थानं मदसलिलजम्बालितभुवां
तदेकं विन्ध्याद्रेर्विपिनमथवा भूपसदनम् ॥६६॥

६५५ लुलाये गोमायौ मृगपरिषदि श्वापदकुले
करिष्यन् कार्पण्यं किमिह[5] महिमानं गमयसि ।

---

१. ख न श्लिष्टा । २. क ग °राजवधा° । ३. ग करं । ४. ग कस्याप्येतौ । ५. ख किमिव

निमग्नः पङ्केऽस्मिन्ननुभव करीन्द्राधिप दशा-
मभद्रं भद्रं वा विधिलिखितमुन्मूलयतु कः ॥६७॥

—कयोरपि[1]

६५६ तापो नापगतस्तृषा न च कृशा धौता न धूली तनो-
र्न स्वच्छन्दमकारि कन्दकवलः का नाम केलीकथा ।
दूरोत्क्षिप्तकरेण हन्त करिणा स्पृष्टा न वा पद्मिनी
प्रारब्धो मधुपैरकारणमहो झाङ्का[2]रकोलाहलः ॥६८॥

—लक्ष्मणसेनस्य

६५७ एष एव मनस्तापः पङ्के मग्नस्य दन्तिनः ।
यतन्ते[3]यत्समुद्धर्तुं ज्ञातयो निभृतस्मिताः ॥६९॥

६५८ गजस्य पङ्कमग्नस्य त्रपाकरमिदं महत्
पारमुत्प्लुत्य यद् गच्छन् हरिणोऽपि हसत्यसौ ॥७०॥

—भानुकरस्यैतौ

अथ मृगः

६५९ तृणं किं तर्णोषि प्रपिबसि किमर्णोऽपि मधुरं
रतक्रीडासक्तामभिरमयसे किं नु हरिणीम् ।
अये जानासि त्वं न खलु मृगयोः पाशपतितं
ततो मोक्षोपायं तव[4] कमपि सञ्चिन्तय सखे ॥७१॥

—लक्ष्मणस्य

अथ मेघः

६६० ते ते चातकपोतका वितृषिता दावाग्निमग्नं वनं
सन्निर्वापितमुष्णतापितमही निर्वापिता सर्वतः ।
कासाराः परिपूरिताः पृथुपयोधाराभिरम्भोधर
त्वय्येवायमहो महोर्जितमहादानावदानक्रमः ॥७२॥

---

१. ख केषामप्येते, ग कस्याप्येतौ । २. ग झङ्का° । ३. अयंते (?) । ४. ख ग बत ।

६६१ नीरं दूरं तदपि विरसं जङ्गमा नो लताद्या-
स्तस्मिन् दातर्यपि जलनिधौ को लभेताम्बुबिन्दुम् ।
दानाध्यक्षे त्वयि जलधर क्वापि कुत्रापि शैलाः
शालावन्तो[1]ऽमृतनिभजलैस्तर्पिताः सर्वं एते ॥७३॥

६६२ अकूपाराद् वारि प्रचुरतरमादाय जलदः
स दानाध्यक्षोऽपि प्रकिरति जलं नाद्भुतमिदम् ।
स मेघो धन्यो यत् परिकिरति मुक्ताफलतया
यदीयाऽसौ कीर्तिर्नटति नृपनारीकुचतटे ॥७४॥

६६३ नैवालवालवलयं भरितं द्रुमाणां
नार्द्रीकृताऽपि बत चातकपोतचञ्चुः ।
दावानलाकुलतरुः शमितो न शीघ्रं
भाराय वारिधर वारि परं[2] तवाभूत् ॥७५॥[3]

—लक्ष्मणस्यैते

६६४ आश्रयः क्रियता[4]मेष तरुः सन्मार्गमाश्रितः ।
पाथोद सिच्यतां[5] काले नोपेक्ष्यो दूरभावतः ॥७६॥

—रङ्गनाथस्य

६६५ भेकैः कोटरशायिभिर्मृतमिव क्ष्मान्तर्गतं कच्छपैः
पाठीनैः पृथुपङ्कपीठलुठितैर्य[6]स्मिन् मुहुर्मूर्च्छितम् ।
तस्मिञ्शुष्कसरस्यकालजलदेनागत्य तच्चेष्टितं
यत्राकुम्भनिमग्नवन्यकरिणां यूथैः पयः पीयते ॥७७॥

—भोजप्रबन्धात्

६६६ शोषं[7] गते सरसि शैवलमञ्जरीणा-
मन्तस्तिमिर्लुठति तापविशीर्णदेहः[8] ।

---

१. ख ग °वल्ल्यो । २. का मा रिपदं । ३. ख एतदनन्तरं पद्यमिदमस्ति—
यत्पल्लवः समभवत्कुसुमं यदासीत्तत्सर्वमस्य भवतः पयसः प्रसादः ।
यद् भूरुहे फलविधौ न ददासि वारि प्राचीनमम्बुद यशो मलिनीकरोषि ॥
—भानुकरस्य
४. का-मा क्रियता° । ५. क सोच्यतां, ख सिच्यते । ६. क ख ग °लुठनाद्य' ७. ख शेषं । ८. ख ग °विसंस्थुलाङ्गः ।

अत्रान्तरे यदि न वारिद वारिपूरै-
राप्लावयेस्तदनु किं मृतमण्डनेन ॥७८॥

६६७ प्रावृषेण्यस्य मालिन्यं दोषः कोऽभीष्टवर्षिणः ।
शारदा[1]भ्रस्य शुभ्रत्वं[2] वद कुत्रोपयुज्यते ॥७९॥

६६८ त्वमेव चातकाधार इति केषां न गोचरः ।
धिगम्भोधर तस्यापि कार्पण्योक्तिं प्रतीक्षसे ॥८०॥

—केषामप्येते[3]

## अथ वायुः

६६९ वृथा धूलीधाराः परिकिरसि वात्याः प्रथयसे
नवावेगः कोऽयं पवन तव हा नन्वसमये ।
रतान्तश्रान्ताभिः स्तिमितनयनान्ताभिरनिशं
स्मृतो यत्कान्ताभिर्न सुलभतरः क्वापि च भवान् ॥८१॥

६७० स्वतो ददासि नो नीरं नीरदानोन्मुखं घनम् ।
यत्तु वारयसे तन्न[4] मातरिश्वन् तवोचितम् ॥८२॥

—लक्ष्मणस्य[5]

## अथ चन्द्रान्यापदेशः

६७१ कलास्तास्ताः सम्यग् वहसि यदसि त्वं द्विजपति-
र्द्युतिस्तादृग् नूत्ना जनिरपि च रत्नाकरकुले ।
बहु ब्रूमः किं वा पुरहरशि[6]रोमण्डनमसि
त्वदीयं तत्सर्वं शशधर कलङ्काद् विफलितम् ॥८३॥

—लक्ष्मणस्य

६७२ व्यज्यमान[7]कलङ्कस्य वृद्धौ सति[8] कलानिधेः ।
आशास्महे वयं पूर्वां सर्वश्लाघ्यां कृशां दशाम् ॥८४॥

---

१. क ख ग शरद° । २. क ख गौरत्वं । ३. ग °मप्येतौ । ४. ख ग तत्तु । ५. ख रद्दं लक्ष्म° । ६. क त्रिभुवनस (शि?)° । ७. क ख ग व्यजमान° । ८. ख ग वृद्धौ ।

६७३ क्षीणः क्षीणः समीपत्वं पूर्णः पूर्णोऽतिदूरताम् ।
उपैति मित्राद् यच्चन्द्रो युक्तं तन्मलिनात्मनः ॥८५॥

—कयोरपि[1]

६७४ नीराणि नक्रवडवानलदूषितानि
तीराणि दुस्तरतरङ्गदुरुत्तराणि ।
श्लाघ्यं किमस्य जलधेर्यदि नैष सून-
राशाप्रसाधनकरो रजनीकरः स्यात् ॥८६॥

—भानुकरस्य

## अथ रवेरन्यापदेशः

६७५ खद्योतो द्योतते तावद् यावन्नोदयते शशी[2] ।
उदिते तु सहस्रांशौ न खद्योतो न चन्द्रमाः ॥८७॥

६७६ दक्षिणाशाप्रवृत्तस्य प्रसारितकरस्य च ।
तेजस्तेजस्विनोऽर्कस्य क्षीयते[3]ऽन्यस्य का कथा ॥८८॥

६७७ करं प्रसार्य रविणा दक्षिणाशावलम्बिना ।
न केवलमनेनात्मा दिवसोऽपि लघूकृतः ॥८९॥

—केषामपि

६७८ यत्पादाः शिरसा न केन विधृताः पृथ्वीभृतां मध्यत-
स्तस्मिन् भास्वति राहुणा कवलिते लोकत्रयीचक्षुषि[4] ।
खद्योतैः स्फुरितं तमोभिरुदितं ताराभिरुज्जृम्भितं
घूकैरुत्थितमाः किमत्र करवै किं किं न कैश्चेष्टितम् ॥९०॥

—परिमलस्य

इति श्रीआ[5]ङ्कोलकरलक्ष्मणभट्टकृतौ[6] पद्यरचनायां चतुर्दशो व्यापारः ।

• • •

---

१. ग कस्याप्येतौ । २. क रविः, ख °न्नोदेति चन्द्रमाः । ३. ख हीयते । ४. ख °त्रये चक्षुषि । ५. ख इति आ° । ६. ख °भट्टविरचितायां ।

## पञ्चदशो व्यापारः

### अथ कौतुकात् किञ्चित् समस्याख्यानम्[1]

६७९ सर्वस्य जन्तोर्भवति प्रमोदो विरोधिवर्गे परिभूयमाने ।
तिरोहिते त्वद्यशसा नरेन्द्र चन्द्रोदये नृत्यति चक्रवाकी ॥१॥

—देवेश्वरस्य

६८० तवानने मानिनि मञ्जुलस्य यदञ्जनस्यैष लवो निमग्नः ।
इतीव लोकः प्रकरोति[2] तर्कं पिपीलिका चुम्बति चन्द्रबिम्बम् ॥२॥

—लक्ष्मणस्य

६८१ चमूभरन्यञ्चदुदञ्चदुर्वीतले प्रयाणे तव भूमिपाल ।
अभून्नृपाणां विगलत्त्रपाणां कण्ठे कुठारः कमठे ठकारः ॥३॥

६८२ प्रविशति हरिनाभीपङ्कजान्तर्निषण्ण-
द्रुहिणचरणसेवां कर्तुमिन्द्रे स्व(स)सैन्ये[3] ।
अगणितपरिमाणे भृङ्गभङ्गीं दधानो ।
भ्रमति कमलकोशे मत्तमातङ्गसङ्घः ॥४॥[4]

६८३ तन्तुं पर्वतसन्निभेन कपिनालात्रं कृतां वक्षसि
क्षिप्रं वीक्ष्य निमज्जतीरथ नलस्पृष्टास्तरन्तीः शिलाः ।
लोको नृत्यपरं विभीषणजनं चेत्याह सेतूद्यमे
तुम्बी मज्जति सन्तरन्ति दृषदः प्रेतो दिवा नृत्यति ॥५॥

---

१. *क ख* °ख्यानम्, तत्र चतुर्थचरणसमस्यायाः पूरणं यथा । २. *ख* लोकस्य करोति ।
३. *का-मा* हरिताभः पङ्कजातेर्निभगनद्रुहिणचरणंसेवां कर्तुमिद्रेशलेपैः (?) । ४. *क ख* एतदनन्तरं पद्यमिदमस्ति—

तिलकमलिकसंस्थं वीक्ष्यते पक्ष्मलाक्ष्या
मृगमदगजराजीराजितं यावदाशु ।

६८४ कर्णेन निर्जितो[1]ऽस्मीति चिन्तां चिन्तामणे त्यज ।
जिता देवद्रुमाः पञ्च न दुःखं पञ्चभिः सह ॥६॥

६८५ यदि प्राप्नोमि तां तन्वीं नोर्वशीमपि[2] कामये ।
को विहाय सुधाधारां दशमूलीपयः पिबेत् ॥७॥

६८६ स्निग्धालिबद्ध[3]सौहार्दं सरसामोदमन्दिरम् ।
इयं गुणवती[4] भाति पुष्पमालेव कामिनी ॥८॥

६८७ युद्धक्रुद्धभटच्छिन्नकुम्भिकुम्भस्थलोद्गतैः ।
मुक्ताफलशतैः शङ्के दिवा तारकितं नभः ॥९॥

६८८ धन्योऽसौ पौत्रिणी[5]पुत्रो यस्यासौ प्रलयापदि ।
सगोत्रस्य स्थितो[6] दंष्ट्राकण्टकाग्रे महोदधिः॥१०॥

६८९ सुमेरुशिखरप्रान्तस्थितदिव्यवधूमुखैः ।
परितः स्फुरितैः शङ्के शतचन्द्रं नभस्तलम्[7] ॥११॥

६९० [8]दामोदरकराघातैर्विह्वलीकृतचेतसा ।
दृष्टं चाणूरमल्लेन शतचन्द्रं नभस्तलम्[9] ॥१२॥

६९१ विधे विधेहि शीतांशुं यावदायाति मे पतिः ।
आयाते दयिते कुर्या[10] शतचन्द्रं नभस्तलम्[11] ॥१३॥

६९२ चित्राय त्वयि चिन्तिते स्मृतिभुवा सज्जीकृतं स्वं धनु-
र्वर्तिं धर्तुमुपागतेऽङ्गुलियुगे बाणा गुणे योजिताः[12] ।
प्रारब्धे तव[13] चित्रकर्मणि पुनस्तद्[14]बाणभिन्ना सती
भित्तिं द्रागवलम्ब्य सिंहल[15]पते सा तत्र चित्रायते ॥१४॥

---

अमलजललवान्तस्तावदेवास्य पाना-
न्मशकगलकरन्ध्रे हस्तियूथं प्रविष्टम् ॥

१. ख विजितो । २. का-मा नो वर्षमपि । ३. ख °बद्ध° । ४. का-मा गणयती । ५. ख पौत्रिणी° । ६. क सगोत्रं संस्थितो ख सगोत्रः संस्थितो । ७. क °स्थलम् । ८. ख ग अत्र दामोदर० इत्यादिपद्यादारभ्य त्वत्कीर्ति० इत्यादिपद्यं यावन्नास्ति । ९. क °स्थलम् । १०. क चैव । ११. क °स्थलम् । १२. क बाणो गुणे योजितः । १३. क त्वयि । १४. क भृशं तद्° । १५. क सिन्धल° ।

६९३ त्वत्कीर्तिमौक्तिकफलानि[1] गुणैस्त्वदीयैः
सन्दर्भितुं विबुधवामदृशः प्रवृत्ताः ।
नान्तो गुणेषु न च कीर्तिषु रन्ध्रलेशो
हारो न जात इति ताश्च मिथो हसन्ति ॥१५॥

—केषाञ्चित्

६९४ हीनहत्या दधात्येव[2] लाघवं[3] महतामपि ।
इति मत्वा द्विपद्वेषी मृगात् सिंहः पलायते ॥१६॥

—कस्यचित्[4]

६९५ [5]मन्दानिलाहतविलोलशिखप्रदीप-
कक्षान्तरे विनिहितं सभयं तरुण्याः ।
तस्याः समस्तकुचकुम्भयुगं निरीक्ष्य
बाहुं विनैव विदधाति शिरःप्रकम्पम् ॥१७॥

—भानुकरस्य[6]

६९६ यत्राखण्डलदन्तिदन्तमुसलान्याखण्डितान्याहवे
धाराऽयत्र पिनाकपाणिपरशोराकुण्ठतामागताः[7] ।
तन्मे तावदुरो नृसिंहकरजैर्व्यादीर्यते[8] साम्प्रतं
दैवे दुर्बलतां[9] गते तृणमपि प्रायेण वज्रायते ॥१८॥

—कस्यापि

**अत्रैव प्रश्नोत्तरेण यथा**

६९७ कस्तूरी जायते कस्मात् को हन्ति करिणां कुलम् ।
किं कुर्यात् कातरो युद्धे मृगात् सिंहः पलायते ॥१९॥

**अत्रैव पदभङ्गेन यथा**

मृगात्[10] मृगमत्तीति मृगात् इति[11] सिंहविशेषणम् । पलाय मांसाय । ते तवेति ।

---

१. क °फलैश्च । २. क दधत्येव । ३. ग लघुत्वं (?) । ४. ग 'कस्यचित्' इति नास्ति । ५. ख ग अत्र मन्दानिला° इत्यादि यत्राखण्डल° इत्यादि च पद्यद्वयं नास्ति । ६. क °दत्तस्य । ७. क °राकुण्ठता वक्षसि । ८. क °रादीर्यंते । ९. क दुर्जनतां । १०. ख 'मृगात्' इति नास्ति । ११. ख मृगादिदं ।

६९८ अयं मृगः समायाति मृगात् सिंहः पलायते ।
ततो वेगात् पलायस्व त्वरितस्त्वरितैः[1] पदैः ॥२०॥

अथाद्यत्रिचरणसमस्यायाः पूरणमन्त्यचरणेन यथा

६९९ त्रियामा शतयामा स्याच्छतचन्द्रं नभस्तलम्[2] ।
शतेषुरेव[3] पञ्चेषुर्भवेद् यूनां वियोगिनाम् ॥२१॥

७०० मद्गोः शृङ्गं सप्ततालप्रमाणं कल्याणाद्रिः सर्षपस्यैकदेशः ।
बिन्दुः सिन्धुः सिन्धुरप्येकबिन्दुर्लब्धो लुब्धैः[4] साधुनीचोपकारे ॥२२॥

अथ द्वितीयपादतुरीयपादसमस्यायाः पूरणं यथा

७०१ अहल्याकेलिकालेऽभूत् कन्दर्पाणां शतद्वयम् ।
तत्पञ्चबाणभिन्नाक्षः सहस्राक्षोऽन्धतां गतः ॥२३॥[5]

अथाद्यद्वितीय[6]वैदिकपादसमस्यायाः पूरणं यथा

७०२ कामं कामंदुघं[7] धुङ्क्ष्व मित्राय वरुणाय च ।
वयं राजेन्द्र[8] दानेन सर्वान् कामानशीमहि ॥२४॥

अथाद्यतृतीयवैदिकपादसमस्यायाः पूरणं यथा

७०३ अणोरणीयान् महतो महीयान् योगे वियोगे दिवसो[9]ऽङ्गनायाः ।
यज्ञोपवीतं परमं पवित्रं स्पृष्ट्वा सखे सत्यमिदं ब्रवीमि ॥२५॥

७०४ [10]अणोरणीयान् महतो महीयान् मध्यो नितम्बश्च मम प्रियायाः ।
यज्ञोपवीतं परमं पवित्रं किञ्चाङ्गरागारुणितं प्रियायाः ॥२६॥

—देवेश्वरस्यैते

---

१. ग °तः सरितैः । २. क °स्थलम् । ३. ख ग °रेव । ४. ख ग °बिन्दुरब्धौ लुब्धे । ५. ग पद्यमिदं नास्ति । ६. ग अथ तृतीयपादतुरीय° । ७. ख ग °दुघे । ८. का-मा धीरेण । ९. क °योगेऽपि विशोऽङ्ग° । १०. क ख ग इतः पूर्वं 'तदेव यथा' इत्यस्ति ।

## अथ बहिर्लापिका:[1]

७०५ का मेघादुपयाति कृष्णदयिता का वा सभा कीदृशी
कां रक्षत्यरिहा[2] शरद् विकचयेत्कं धैर्यहन्त्री च का ।
कं धत्ते गणनायकः करतले का चञ्चला कथ्यता-
मारोहादवरोहतश्च निपुणैरेकं द्वयोरुत्तरम् ॥२७॥

अत्र धारा राधा, वन्द्या द्यावम्, काशं शङ्का, पाशं शम्पा इत्यारोहादव[3]रोहणेन व्याख्यानम् ।

## अथ चित्रकाव्यम्

७०६ लोकानां मानपात्रं मनुजजनरतिस्त्वं समूढ्याङ्घ्रि[4]रक्षो
राज्ञामा[5]सत्त्वदक्षः[6] कृतसमयरुचि[7]र्मण्डितो वीरवर्गैः ।
कायत्वङ्मीन[8]नकेतुः करमलितयवां कोऽवमा[9]नैर्विहीनः
श्रीमद्[10]वीराधिराज त्व[11]मिव तव रिपुस्तत्र मं दं प्रतीमः[12] ॥२८॥

अत्र शत्रु[13]पक्षे मकारस्थाने दकारः पठनीयः ।

७०७ वादानाशानुयुक्तो नगरकृतमतिर्यौवनाक्रान्त[14]देहः
सङ्ग्रामप्राप्तधैर्यो न विदलितरुचा राजलक्ष्म्यातिहीनः[15] ।
नित्यं दारासभस्थः[16]प्रखरतनुनिभो यः सुभिक्षानुवर्ती
श्रीमद्वीराधिराज त्वमिव तव रिपुस्तत्र मुक्तादिवर्णः ॥२९॥
अत्र पद्ये शत्रुपक्षे आद्याक्षरत्यागः ।

—एतौ लक्ष्मणस्य[17]

इत्यादि चित्रकाव्यं ग्रन्थगौरवभयादुपेक्ष्यते ।[18]

---

१. ग °पिका । २. क °त्यहहा, ग °त्यहिहा । ३. ग °त्यारोहाव° । ४. ख ग समूढाङ्घ्र° । ५. ख ग राज्ञां मा° । ६. क °दक्षो । ७. ख ग °विरुट् । ८. ग कार्या त्वण्मी° । ९. का-मा कोषमा° । १०. क ख श्रीमान् ग श्रीमान्, ग श्रीमन् । ११ ख °जस्त्वमिव । १२. क प्रतीवः । १३. क ग अत्र पद्ये शत्रु° । १४. ख °वनात्क्रान्त° १५. ख ग रविदलितरुची राजयक्ष्माति° । १६. क ख °समास्थः । १६. ख श्रीमन् । १७. °क्ष्मणस्यैतौ । १८. ग वाक्यमिदं नास्ति ।

अथ सज्जनः

७०८ अपेक्षन्ते न च स्नेहं न पात्रं न दशान्तरम् ।
सदा लोकहिते रक्ता[1] रत्नदीपा इवोत्तमाः ॥३०॥

अथोदारः

७०९ अयं निजः परो वेति गणना लघुचेतसाम् ।
उदारचरितानान्तु वसुधैव कुटुम्बकम्[2] ॥३१॥

७१० अर्थिनां कृपणा दृष्टिस्त्वन्मुखे पतिता सकृत् ।
तदवस्था पुनर्देव नान्यस्य मुखमीक्षते ॥३२॥

—दण्डिनः

अथ प्रशंसा[3]

७११ स्वयं स्वगुणविस्तारादू[4]र्णनाभः पतत्यधः ।
तमेव संहरन्[5] भूयः पदमुच्चैर्विगाहते ॥३३॥

गुणप्रशंसा[6]

७१२ गुणैरुत्तुङ्गतां याति[7] नोच्चैरासनसंस्थितः ।
प्रासादशिखरारूढः काकः किं गरुडायते ॥३४॥

अथ संसर्गप्रशंसा

७१३ किं वापरेण बहुना परिजल्पितेन
संसर्ग एव महतां महते फलाय ।
अम्भोनिधे[9]स्तटरुहास्तरवोऽपि येन[10]
वेलाजलोच्छलितरत्न[11]कृतालवालाः ॥३५॥

---

१. ख युक्ता । २. ख एतदनन्तरं 'कस्यापि' इति लिखितम् । ३. क ग अथ गुणप्र° ।
४. क ख ग गुणपरिस्यागद्' । ५. क ख ग तमेवानुसरन् । ६. ग 'गुणप्रशंसा' इति नास्ति ।
७ ख यान्ति । ८. ख 'स्थितः । ९. क °स्ते । १०. क देश । ११. क 'वीचि' ।

७१४ न स्थातव्यं न गन्तव्यं क्षणमप्यधमैः सह ।
पयोऽपि शौण्डिकी[1]हस्ते मदिरां मन्यते जनः ॥३६॥

७१५ वीणावंशाश्रया तु[2]र्वी चुम्बत्युच्चैः कुचौ स्त्रियाः ।
पिबत्य[3]नार्यसंयोगाद्रक्तं नक्तञ्चरी[4] यथा ॥३७॥

—केषामपि[5]

७१६ सन्तप्तायसि संस्थितस्य पयसो नामापि न श्रूयते[6]
मुक्ताकारतया तदेव नलिनीपत्रस्थितं राजते[7] ।
स्वात्यां सागरशुक्तिसम्पुटगतं[8] तज्जायते मौक्तिकं[9]
प्रायेणाधममध्यमोत्तमगुणः संसर्गतो जायते[10] ॥३८॥

—भर्तृ हरेः

७१७ वारिहारिघटीदोषात् ताड्यते यत्र झल्लरी ।
सच्छिद्रपुरुषस्याग्रे न स्थातव्यं कदाचन ॥३९॥[11]

## अथ धनस्तुतिः

७१८ जातिर्यातु रसातलं गुणगणस्तस्याप्यधो गच्छता-[12]
च्छीलं शैलतटात्पतत्वभिजनः सन्दह्यतां वह्निना ।
शौर्ये वैरिणि वज्रमाशु निपतत्वर्थोऽस्तु नः केवलं
येनैकेन विना गुणास्तृणलवप्रायाः समस्ता इमे ॥४०॥

७१९ यस्यास्ति वित्तं स नरः कुलीनः स पण्डितः स श्रुतवान् गुणज्ञः ।
स एव वक्ता स च दर्शनीयः सर्वे गुणाः काञ्चनमाश्रयन्ति ॥४१॥

—एतौ भर्तृहरेः[13]

७२० धनमर्जय काकुत्स्थ धनमूलमिदं जगत् ।
अन्तरं नैव पश्यामि निर्धनस्य मृतस्य च ॥४२॥

—वासिष्ठात्[14]

---

१. क ख ग शौण्डिनी° । २. ख ग °श्रयात्तु° । ३. क पिबन्त्य° । ४. ख ग °ञ्चरो । ५. ग °मप्येते । ६. म ज्ञायते । ७. ग दृश्यते । ८. क °सम्पुटमध्यपतितं (?) । ९. ख ग तन्मौक्तिकं जायते । १०. क मध्यमाधमजनैः संसर्गतो भूयते । ११. ख ग पद्यमिदं नास्ति । १२. ख नीयता, ग गच्छतां । १३. ग भर्तृहरेरेतौ । १४. ख कस्यापि ।

## अथ धननिन्दा

७२१ भक्ते द्वेषो[1] जडे प्रीतिररतिर्गुरुलङ्घनम्[2] ।
मुखे च[3] कटुता[4] नित्यं धनिनां ज्वरिणामिव ॥४३॥

७२२ आलिङ्गिताः परैर्यान्ति प्रस्खलन्ति समे पथि ।
अव्यक्तानि च भाषन्ते धनिनो मद्यपा इव ॥४४॥

७२३ लक्ष्मीर्यादोनिधेर्यादो नादो वादोचितं वचः ।
बिभ्यती धीवरेभ्यो या जडेष्वेव निमज्जति ॥४५॥

७२४ लक्ष्मि क्षमस्व वचनीय[5]मिदं दुरुक्त-
मन्धीभवन्ति पुरुषास्तव सेवनेन ।
नो चेत्कथं कमलपत्रविशालनेत्रो
नारायणः स्वपिति पन्नगभोगतल्पे ॥४६॥[6]

## अथ कृपणः

७२५ यदर्ज्यते परिक्लेशैरर्जितं यन्न भुज्यते ।
विभज्यते तदन्तेऽन्यैः कस्यचिन्माऽस्तु तद् धनम् ॥४७॥

—केषामपि[7]

७२६ यत्करोत्यरतिक्लेशं[8] तृष्णां मोहं प्रजागरम् ।
न तद्धनं कदर्याणां हृदये [9]व्याधिरेव सः ॥४८॥

—क्षेमेन्द्रस्य[10]

७२७ मृत्युः शरीरगोप्तारं धनरक्षं वसुन्धरा ।
दुश्चारिणी च हसति स्वपतिं पुत्रवत्सलम् ॥४९॥

—बाणस्य[11]

---

१. क भक्तद्वेषे । २. क ग जलप्रीतिः सुरुचिर्गुरुलङ्घने । ३. क मुखेषु ग सुखेषु ।
४. ख कटुकता । ५. क सहनीय° । ६. ख ग पद्यमिदं नास्ति । ७. ग °मप्येते ।
८. ख ग 'रतिं क्लेशं । ९. क ख ग हृदयव्या । १०. का·मा 'क्षेमेन्द्रस्य' इति नास्ति ।
११. का·मा 'बाणस्य' इति नास्ति ।

७२८ सति द्राक्षाफले क्षीरे मृदामास्वादनं मुदे[1] ।
अहो मातुरियं रीतिः कृपणे गर्भवर्तिनि ॥५०॥

—भानुकरस्य

७२९ स प्राप्तानपि भोगान्न[2] भोक्तुमीष्टे मितम्पचः[3] ।
रसालकाले वलिभुङ् मुखरोगाकुलो यथा ॥५१॥

—लक्ष्मणस्य[4]

## अथार्थी

७३० जनस्थाने भ्रान्तं कनकमृगतृष्णाकुलतया[5]
वचो वैदेहीति प्रतिपदमुदश्रु प्रलपितम् ।
कृता लङ्काभर्तुर्वदनपरिपाटीषु घटना
मयाप्तं रामत्वं कुशलवसुता न त्वधिगता ॥५२॥

—कस्यापि[6]

## अथ दरिद्रः

७३१ परीक्ष्य सत्कुलं विद्यां शीलं शौर्यं सुरूपताम् ।
विधिर्ददाति निपुणः कन्यामिव दरिद्रताम् ॥५३॥

७३२ हे दारिद्र्य नमस्तुभ्यं सिद्धोऽहं त्वत्प्रसादतः ।
पश्याम्यहं जगत्सर्वं न मां पश्यति कश्चन ॥५४॥

—कयोरपि[7]

७३३ कन्थाखण्डमिदं प्रयच्छ यदि वा स्वाङ्के गृहाणार्भकं
रिक्तं भूतलमत्र नाथ भवतः पृष्ठे पलाशो[8]च्चयः ।
दम्पत्योर्निशि जल्पतोरिति वचः श्रुत्वैव चौर[9]स्तदा
लब्धं कर्पटमन्यतस्तदुपरि क्षिप्त्वा रुदन्निर्गतः ॥५५॥

—भोजप्रबन्धात्

१. ख °स्वादने मृदः, °स्वादने मुदा । २. ग सम्प्राप्तानपि नो भोगान्° । ३. ख °गान् भोक्तुं मितं वचः । ४. ख कस्यापि । ५. क ख °न्धितधिया, ग °कुलधिया । ६. ख 'कस्यापि' इति नास्ति । ७. ग कस्याप्येतौ । ८. ख ग पलालो° । ९. क ख ग चोर° ।

७३४ उत्थाय हृदि लीयन्ते निर्धनानां[1] मनोरथाः ।
बालवैधव्यदग्धानां कुलस्त्रीणां कुचा इव ॥५६॥

—कस्यापि

अथ खलः

७३५ वक्रत्वं ननु कुन्तलादिव मुखे तैक्ष्ण्यं कटाक्षादिव
क्रूरत्वं कुचमण्डलादिव सुनैर्घृण्यं स्वचित्ता[2]दिव ।
मालिन्यं नयनाञ्जनादिव किलाधैर्यं स्वभावादिव
स्वैरन्यैश्च[3] सुशिक्षितोऽसि खल किं जातोऽस्यतोऽरुन्तुदः ॥५७॥

—लक्ष्मणस्य

७३६ हस्त इव भूतिमलिनो लङ्घयति यथा यथा खलः सुजनम् ।
दर्पणमिव तं कुरुते तथा तथा निर्मलच्छायम् ॥५८॥

—सुबन्धोः

७३७ खलानां कण्टकानाञ्च द्विविधैव प्रतिक्रिया ।
उपानन्मुखभङ्गो वा दूरतो वा विसर्जनम् ॥५९॥

७३८ नौश्च दुर्जनजिह्वा च प्रतिकूलप्रसारिणी ।
परप्रतारणायैव दारुणा केन निर्मिता ॥६०॥

—कस्यापि[4]

अथ कुपुत्रः

७३९ पित्रोर्नैव वचः शृणोति दिवसत्यागे व्रजत्यालयं
यान्तीभिर्युवतीभिरध्वनि मुहुः कौतूहलं विन्दति ।
बन्धूनामुपदेशवाचि वदति क्रोधैकतानं वचः
साधून् निन्दति दुर्जनं च मनुते मित्रं कुपुत्रो जनः ॥६१॥

---

१. ख दरिद्राणां । २. ख स्ववित्ता° । ३. क °रिण्येव°, ख ग °रिण्येव । ४. ख कयोरपि, ग °प्येतौ ।

अथ कापुरुषः

७४० नारीणां वचनेन कर्म कुरुते दीनं वचो भाषते
नालस्यं विजहाति तिग्मकिरणे प्रौढे समुत्तिष्ठति ।
किञ्चित् क्वापि न साहसं वितनुते गेहे चिरं दूयते
नो वा विन्दति पौरुषं कुपुरुषः कोऽप्येष निर्णीयताम् ॥६२॥

७४१ कापूरुषः कुक्कुरश्च भोजनैकपरायणः ।
लालितः पार्श्वमायाति वारितो नैव[1] गच्छति ॥६३॥

अथ लम्पाकः

७४२ प्रागल्भ्यं प्रथयन् यशो विशदयन् धार्ष्टीं मुखे योजयन्
भूपानां कलयन्[2] कथां विरचयन् हस्ताङ्गुलीः स्फोटयन्[3] ।
दानं पल्लवयन् गुणं द्विगुणयन् नेत्राञ्चलं[4] घूर्णयन्
लम्पाकः सविधं समेत्य सुदृशां किं नाम नो भाषते ॥६४॥

अथ कर्कशा

७४३ समेत्य बहिरङ्गणात् कलहवाक्यमाविभ्रती
रजः किरति हुङ्करोत्यवनिमङ्घ्रिणास्कन्दति ।
रदैः कटकटध्वनिं वहति मोटयत्यङ्गुली-
र्वपुर्दशति फूत्कीर्तिं[5] कलयति क्रुधा धावति ॥६५॥

—भानुकरस्यैते

अथ पण्डितः

७४४ व्यासादीन् कविपुङ्गवाननुचितैर्वाक्यैः सलीलं हस-
न्नु[6]च्चैर्जल्प निमील्य लोचनयुगं श्लोकान् सगर्वं पठ[7] ।
काव्यं धिक्कुरु यत्परै[8]र्विरचितं स्पर्धस्व सार्धं बुधै-
र्यद्यभ्यर्थयसे श्रुतेन रहितः पाण्डित्यमाप्तुं बलात् ॥६६॥

—कस्यापि

---

१. ख ग न च । २. क कथयन् । ३. ख ग °ङ्गुलीस्फोटनम् । ४. ग °ञ्चले ।
५. ख थूत्कृतिं । ६. ग हसेत्यु° । ७. ग पठन् । ८. ग धिक्करयन् परं° ।

७४५ अधिगतपरमार्थान् पण्डितान् मावमंस्था-
स्तृणमिव लघु लक्ष्मीर्नैव तान् संरुणद्धि ।
मदमिलितमिलिन्दश्याम[1]गण्डस्थलानां[2]
न भवति बिसतन्तुर्वारणं वारणानाम् ॥६७॥

७४६ इह तुरगशतैः प्रयान्तु मूढा[3] धनरहितास्तु बुधाः[4] प्रयान्तु पद्भ्याम् ।
गिरिशिखरगताऽपि काकपङ्क्तिः पुलिनगतैर्न समत्वमेति हंसैः ॥६८॥

—भर्तृहरेरेतौ

अथ मुनिः

७४७ वल्मीकाग्रनिमग्नमूर्तिरुरगत्वग्ब्रह्मसूत्रान्तरः
कण्ठे जीर्णलतावितान[5]वलयेनात्यर्थसम्पीडितः ।
अंशव्यापिशकुन्तनीडनिचयं बिभ्रज्जटामण्डलं
यत्र स्थाणुरिवाचलो मुनिरसावभ्यर्कबिम्बं स्थितः ॥६९॥

—कालिदासस्य

अथ तपोवनम्

७४८ तपोवने केसरिणीकरिण्योरिहाद्भुतं शावकयोर्व्यलोकि ।
व्यातेनतुर्यत्स्तनपानकाले मात्रोर्विपर्यासविलासमेतौ ॥७०॥

—लक्ष्मणस्य

७४९ विलोक्य[6] कमलाकान्तमबलास्तनलालसम्[7] ।
जहसुः कुसुमव्याजादिव यत्र महीरुहः ॥७१॥

७५० मृगसहितं मृगलाञ्छनमाक्रामन्तं विधुन्तुदं वीक्ष्य ।
यत्र भयेन भजन्ते मृगशिशवो मृगदृशामङ्कं ॥७२॥

—भानुकरस्यैते[8]

१. क ख ग अभिनवमदलेखाश्याम° । २. क °स्थलीनाम् । ३. क मूर्खा । ४. ख ग °हिता विबुधा । ५. °तावतान°, ग °प्रतान° । ६. ख ग विहाय । ७. ख ग °लालसान् । ८. ग °करस्य ।

७५१ श्यामाकतन्दुलविलेपकदर्थिताभि-
रेताभिरग्निशरणेषु सधर्मिणीभिः ।
तत्त्रासहेतुमपि दण्डमुदस्यमान-
माघ्रातुमिच्छति मृगे मुनयो हसन्ति ॥७३॥

—मुरारेः

## अथ महावनम्

७५२ इह महिषविषाणव्यस्तपाषाणपीठ-
स्खलनसुलभरोहद्[1]गर्भिणीभ्रूणहत्याः ।
कुहरविहरमाण[2]प्रौढभल्लूकहिक्का-
चयचकितकिरातन्यस्तशस्त्रा वनान्ताः ॥७४॥

—मुरारेः[3]

## अथ मृगया

७५३ अरण्यहरिणग्राममाचक्राम हुताशनः ।
इन्दोः क्रोडमृगं धर्तुमिव धूमो नभो ययौ ॥७५॥

७५४ उपगूहति दवदहने त्रिभुवनधन्यामरण्यानीम् ।
मूर्ता इवान्धकाराः[4] प्रतिदिशमपयान्ति कासरावलयः ॥७६॥

—गणपतेः

७५५ अथ व्यस्यन् व्याघ्रान् वनकुहरकोलान् विकलयन्
विलुम्पन् व्यालालीरपि विघटयन् वानरघटाः ।
महर्क्षान् संतक्षन् परिमृगयमानो मृगकुलं
मृगेन्द्रान् भिन्दानो नृपतिरभि[5]तेने स मृगयाम् ॥७७॥

७५६ निहत निहत तूर्णं[6] धत्त धत्त त्वराभि-
र्मिलत मिलत के के कुत्र कुत्र प्रयान्ति ।

---

१. *ग* °सुरभरोहिद्° । २. *का-मा*° विरहमाण° । ३. *का-मा* 'मुरारेः' इति नास्ति । ४. *ग* °काराः । ५. *क* °तिरपि । ६. *का-मा* तूणे ।

इत इत इत एते यान्ति यान्तीत्यरण्या-
दतुलकलकलश्रीः सर्वतः प्रादुरासीत् ॥७८॥

७५७ उद्यन्महीपालमरीचिमालीशिलीमुखश्रेणिकरावलीभिः ।
उदारभूदारघनान्धकारसम्भारमुच्छिन्नतरं चकार ॥७९॥

—गदाधरस्य[1]

७५८ चन्द्रोऽनेन कलङ्कितो बत वने रामोऽमुना वञ्चितः
किञ्चानेन कुलाङ्गनानयनयोर्लावण्यलक्ष्मीर्हृता ।
सस्यानामभिलाषुकस्य भवतः श्रीरुद्रचन्द्रप्रभो
तन्मन्ये हरिणस्य हन्त हननायाखेटकोपक्रमः ॥८०॥

—रामचन्द्रस्य

७५९ शङ्कुव्याकीर्णरङ्कुद्रुतनिशितशरक्षुण्णदीव्यत्तरक्षु-
व्याघ्रोपक्षुब्धकण्ठीरवरवचकितव्यस्तमातङ्गयूथम् ।
खड्गव्यालूनकण्ठं[2] तुमुलकलकलप्रान्तकूजच्छकुन्तं
भल्लध्वस्ताच्छभल्लं वनभुवि मृगयाकर्म तेन प्रतेने ॥८१॥

—कविराजस्य

## अथ काव्यप्रशंसा

७६० किं कवेस्तस्य काव्येन किं काण्डेन धनुष्मतः ।
परस्य हृदये लग्नं न घूर्णयति यच्छिरः ॥८२॥

७६१ उत्फुल्लगलैरालापाः क्रियन्ते दुर्मुखैः सुखम् ।
जानाति हि पुनः सम्यक् कविरेव कवेः श्रमम् ॥८३॥

—त्रिविक्रमस्य[3]

७६२ कवयः परितुष्यन्ति नेतरे कविसूक्तिभिः ।
न ह्यकूपारवत्कूपा वर्धन्ते विधुकान्तिभिः ॥८४॥

—कस्यापि

१. ग °धरस्यैते । २. क ग °नरवक्त्रं । ३. क °मभट्टस्य, ग °मस्यैते ।

**अथ कवयः**[1]

७६३ अर्थान् केचिदुपासते कृपणवत् केचित्त्वलङ्कुर्वते
वेश्यावत्खलु धातुवादिन इवोद्बध्नन्ति[2] केचिद् रसान् ।
अर्थालङ्कृतिसद्रसद्रवमुचां वाचां प्रशस्तिस्पृशां[3]
कर्तारः कवयो भवन्ति कतिचित्पुण्यैरगण्यैरिह ॥८५॥

— राघवचैतन्यानाम्

७६४ जाता शिखण्डिनी प्राग् यथा शिखण्डी तथावगच्छामि ।
प्रागल्भ्यमधिकमाप्तुं वाणी बाणो बभूवेति ॥८६॥

—गोवर्धनस्य

७६५ तावत्कविविहङ्गानां ध्वनिर्लोकेषु शस्यते ।
यावन्नो विशति श्रोत्रे मयूरमधुरध्वनिः[4] ॥८७॥

७६६ हृदि लग्नेन बाणेन यन्मन्दोऽपि पदक्रमः ।
भवेत्कविकुरङ्गाणां चापलं तत्र कारणम् ॥८८॥

—त्रिविक्रमस्य

७६७ ते भूमीपतयो जयन्ति नतयो येषां[5] द्विषद्भूभृतां
ते वन्द्या यतयो विशन्ति मतयो येषां परब्र[6]ह्मणि ।
ते श्लाघ्याः[7] कवयो वयोमदभरव्याजृम्भमाणाङ्गना-
दृक्पाता इव तोषयन्ति हृदयं येषां गिरां भङ्गयः ॥८९॥

७६८ गणेश्वरकवेर्वचोविरचनैकवाचस्पतेः
प्रसन्नगिरिनन्दिनीचरणपल्लवं ध्यायतः[8] ।
तथा जगति[9] भारती भगवती यथा सा सुधा
मुधा भवति सुभ्रुवामधरमाधुरी म्लायति ॥९०॥

—गणेश्वरस्य

---

१. *का-मा* 'अथ कवयः' इति नास्ति । २. *ग* °द्बध्यन्ति । ३. *ग* °स्पृहां । ४. *ग* °धुरो ध्वनिः । ५. *ग* येषु । ६. *ग* परे ब्र° । ७. बन्द्याः । ८. *क* °ल्लवध्यायिनी । ९. *क* जयति ।

७६९ यशोधननिधेर्यदा नरहरेर्वचो वर्ण्यते
तदा गतमदा मदालसमरालबालारवाः ।
न विभ्रमचरी करी भवति चाधरी माधुरी
सुधाकरसुधाभरी मधुकथा वृथा[1] जायते ॥९१॥

७७० उमामिमां समुद्वीक्ष्य शीतदीधितिशेखराम् ।
एषा तु भारती भानुं मत्तं स्वीकृत्य नृत्यति ॥९२॥

—भानुकरस्यैतौ

७७१ प्रवर्तस्वेति को नाम प्रवर्तेत विना रसात् ।
केन प्रवर्तिता भृङ्गाः प्रवर्तन्ते सरोरुहि ॥९३॥

७७२ सुभाषितरसावलीमधुनि लम्पटोऽयं चिरा-
दटन्निखिलनाटिकाटविषु केन विश्राम्यतु ।
कविव्रजमधुव्रतः समधुवाटिकानिर्मितं
क्षणं नयनगोचरीचरिकरीति यावन्न मे ॥९४॥

—एतौ लक्ष्मणस्य

इति श्रीआङ्कोलकरलक्ष्मणभट्टविरचितायां पद्यरचनायां पञ्च[2]दशो व्यापारः ।

[ क प्रतौ वर्णितानुक्रम एवं दत्तः । अन्ते च पद्यद्वयमपि वर्तते । सर्वमेतद् ग्रन्थकारस्येति मत्वाऽस्माभिरत्र दीयते ]

श्रीरस्तु । अथ वर्णितानुक्रमः । आदौ मङ्गलग्रन्थप्रशंसा । अथावतारेषु मत्स्यः, कूर्म्म[:] वराहः, नृसिंहः, वामनः, भार्गवो रामः, दाशरथी रामः, हली रामः, बुद्धः, कल्कः (ल्की) कृष्णः, कृष्णस्य वाम्यम्, शम्भुः, शम्भु (म्भो) स्ताण्डवम्, गणेशः, कार्तिकेयः, भवानी, लक्ष्मीः, गङ्गा मणिकर्णी, यमुना, इति प्रथमे व्यापारे वर्णितानि ।

अथ द्वितीये कीर्तिः, द्विषदकीर्तिः, शौर्योदार्यप्रधाना कीर्तिः, प्रतापः, कीर्तिप्रतापौ, प्रदानम्, इति द्वितीये व्यापारे वर्णितानि ।

अथ तृतीये पृथ्वीपतिशृङ्गारप्रधाना नृपस्तुतिः, धरित्रीपतियात्रा, पताका, तुरङ्गाः,

---

१. क °सुधा मुधा । २. क इति आङ्कोलकरलक्ष्मणस्य पञ्च° ।

कृपाणः, वीरवाक्यम्, रणः, रणक्षितिः, अरिपलायिनः (लायनम् ?) अरिर्वानिता, अरिनगरम् इति तृतीयव्यापारे वर्णितानि ।

अथ चतुर्थे शृङ्गारः, कामप्रभावः, बालावर्णनम्, वयःसन्धिः, तारुण्यम्, बालानव- (वयव ?) वर्णनम्, केशपाशः, सीमन्तसिन्दूरम्, अलकः, आननम्, भ्रुवौ, नयनम्, अपाङ्गः, नासामौक्तिकम्, कर्णताटङ्कम् अधरः, कण्ठबाहुः, अङ्गुल्यः, स्तनौ, हारः, मध्यः, रोमावली, जघनम्, ऊरू, पादौ, इति चतुर्थे व्यापारे वर्णितानि ।

अथ पञ्चमे विरहिणी, स्मरोपालम्भः, इति पञ्चमे व्यापारे ।

अथ षष्ठे व्यापारे [नायक विप्रलम्भः] ।

अथ सप्तमे कुलाङ्गना कुलाङ्गनाकोपः, प्रोष्यत्पतिका, उत्कण्ठिता, नवोढा, विस्रब्धनवोढा, मुग्धा, प्रौढा, असती, वेश्या, कुलटोपदेशः, इति सप्तमे वर्णितानि ।

अथाष्टमे सौन्दर्यगर्विता, प्रेमगर्विता, खण्डिता, कलहान्तरिता, दूती, दूत्युपहासः, मानिनीमानः, मानापनोदः, परस्परं प्रीतिप्रलापः, रतप्रशंसा रतारम्भः, रतम्, विपरीतरतम्, रतावसानम्, रतनिद्रा, इत्यष्टमे व्यापारे वर्णितानि ।

अथ नवमे प्रभातानुनयः, प्रभातवायुः, प्रभातम्, मध्याह्नः, जलक्रीडा, वनक्रीडा भ्रमरीनृत्यक्रीडा, कन्दुकक्रीडा, दृङ्मीलनक्रीडा, हिन्दोलक्रीडा, सन्ध्या, अन्धकारः, अभिसारिका, इति नवमे व्यापारे वर्णितानि ।

अथ दशमे चक्रवाकः, तारा, चन्द्रः, सकलङ्कश्चन्द्रः, हर्म्यम्, इति दशमे व्यापारे वर्णितानि ।

अथैकादशे नायकाः, अनुकूलो नायकः, दक्षिणनायकः, धृष्टो नायकः, मानी नायकः, अनभिज्ञो नायकः, शिशुनायकः, वृद्धो नायकः, अविदत् (विद्युत् ?) वर्षाविरहिणी, खद्योतः हंसः, इत्येकादशे वर्णितानि ।

अथ द्वादशे शरत्, हेमन्तः, शिशिरः, वसन्तः, ग्रीष्मः, इति द्वादशे व्यापारे वर्णितानि ।

अथ त्रयोदशे रसाः, हास्यरसः, करुणरसः, रौद्ररसः, वीररसः, भयानकरसः, अद्भुतरसः, अद्भुतपर्यवसानात्युक्तिः, शान्तो रसः, इति त्रयोदशे वर्णितानि ।

अथ चतुर्दशे [वृ] क्षाः, कल्पद्रुमस्यान्यापदेशः, चम्पकस्य, केसरतरोः, अगुरोः, आम्रस्य, द्राक्षायाः, पलाशस्य, तालस्य, कमलिन्याः, कुमुदिन्याः, भृङ्गस्य, पिकस्य, चातकस्य, शुकस्य,

राजहंसस्य, समुद्रस्य, तडागस्य, गिरिनिर्झरस्य, जलस्य, कूपस्य, महीधरस्य, केसरिणः, गजस्य मृगस्य, मेघस्य, वायोः, चन्द्रस्य, रवेः, चतुर्दशे व्यापारे वर्णितानि ।

अथ पञ्चदशे समस्याख्यानम्, वहिर्लापिकाः, चित्रकाव्यम्, सज्जनः, उदारः, संसर्गप्रशंसा, धनस्तुतिः, धननिन्दा, कृपणः, अर्थीः, दरिद्रः, खलः, कुपुत्रः, कुपुरुषः, कर्कशः, कुपण्डितः, पण्डितः, मुनिः, तपोवनम्, महावनम्, मृगया, काव्यप्रशंसा, कवयः, इति पञ्चदशे वर्णितानि ।

तदेतैर्व्यापारैरियमुपचिता पञ्चदशभि-
र्लसत्श्रीः श्रीमल्लक्ष्मणविरचिता पद्यरचना ।
समुद्योतं धत्तां त्रिजगति शरच्चन्द्रचलिता
समिद्धा ज्योत्स्नेव प्रचिततिथिभिः पञ्चदशभिः ॥
कौमुदी कौमुदी (दा ?) नीव कामुकानिव कामिनी ।
आनन्दयतु मे पद्यरचना चतुरान् नरान् ॥

समाप्तेयं पद्यरचना ।

संवत् १७९७ वर्षे मिती आसाढसुदिद्वादशीतिथौ एषा पुस्तिका लिपीकृता श्रीसवाइजैपुरनगरमध्ये । श्रीरस्तु । लेषकपाठकयोः । वाच्यमानशतं शरदो जीव्यात् । शुभम् । श्री ।

[ भिन्नैरक्षरैः केनचित् पृष्ठस्य पार्श्वभागे लिखितम् — ]

वर्षे शैलनवाद्रिभूपरिमिते मासे शुचावर्जुने
पक्षे विष्णुतिथौ गुरोः सुदिवसे सत्पुस्तकं लेखकात् ।
दत्वा द्रव्यमुरीकृतं मम कुले सत्पुत्रपौत्राश्च ये
तेऽधीत्यामुमिहोक्तवत्प्रतिपदं कुर्वन्तु पद्यावलीः ॥
हकारो रिकारेण लाकारयुक्तो लकारो विसर्गेण यन्नाम्नि सोऽहम् ।
धराधीश राजेन्द्र जिष्णोः सभायां कवित्वाधिकस्त्वेवमग्रेऽपि पुत्राः ॥

—हरिलालः

• • •

## प्रथमं परिशिष्टम्

# पद्यरचनायां समुद्धृताः कवयो ग्रन्थाश्च

१. अकवरीयकालिदासः ६१, ११३

यथासम्भवं मुगलसम्राजः अकबरस्य ( १५५६-१६०५ खी० ) समकालिकः कविः। अनेन विरचितं 'रामचन्द्रयशःप्रबन्धः' इत्याख्यं काव्यं डा० जे० बी० चौधुरीमहाशयैः प्राकाश्यमानीतम् (प्राच्यवाणी, कलकत्ता, १९४६ खी०)। ग्रन्थस्य पुष्पिकया 'गोविन्द भट्ट' इति मूलं नाम विदितं भवति। अर्वाचीनषु कतिपयेषु सुभाषितसङ्ग्रहेषु सम्राजमकबरमभिलक्ष्यानेन लिखितानि पद्यान्युपलभ्यन्ते। बवेलनृपते रामचन्द्रस्य (१५५५-९२ खी०) यशोगानरूपं काव्यमिदं बघेलविरुदमिति नाम्नोपलब्धमस्माभिः। १५८० खीस्तीयाब्दकालः कवेरस्य काव्यनिर्मितेरित्यनुमानेन साधितं चौधुरी-महाशयैः।

२. अचलः ३८८

कवेरचलस्य पद्यरचनास्थं 'पाणौ पद्मधिये'ति पद्यं 'विद्याकरसहस्रके' अचलमिश्रस्य नाम्ना निर्दिष्टं लभ्यते। श्रीमदुमेशमिश्रैः कविरयं 'अचलोपाध्याय' इति नाम्ना निर्दिष्टः। तन्निर्देशानुसारं, मंगरौलीवास्तव्योऽयं मचलोपाध्यायस्य भ्राताऽऽसीत् अष्टादशशताब्द्यामुत्पन्नस्य रघुदेवमिश्रस्य पुत्रस्य सचलोपाध्यायस्य समकालिक इति। 'सदुक्तिकर्णामृते ( १२०५ खी० ) 'पाणौ पद्मधिये'ति पद्यं पाणिनिनाम्ना निर्दिष्टम्। यद्यपि पाणिनेः पद्यमिदं कदाचिन्न स्यात्तथापि पूर्ववर्तिनि सुभाषितसङ्ग्रहेऽस्योपलम्भात् अष्टादशशताब्द्यामुत्पन्नस्य कवेः कथमपि भवितुं नार्हति। अथवा कस्यचित् प्राचीनस्यैव कवेरचलस्य पद्यं स्यात्।

३. अमरुकः ३२४, ३२७

अमरुकशतककर्तुः कवेरमरुकस्यानन्दवर्धनेन ( ८५० खी० ) ध्वन्यालोके निर्देशः कृतः। वामनेनाप्यस्य पद्यमुद्धृतम्। अतोऽनेन ७५० खीस्तीयाब्दतः पूर्ववर्तिना भाव्यम्।

४. अम्बष्ठः ७६, ४६६

इदं खलु कस्यचित् कायस्थवंशोद्भवस्य कवेरुपनाम स्यात्।

५. अवन्तिवर्मा ३७४

कविरयं ध्वन्यालोककर्तुरानन्दवर्धनस्याश्रयदाता प्रसिद्धः कश्मीरनृपतिरिति सम्भावयितुं शक्यते।

६. अविलम्बः ३२१

अस्य विषये नास्ति विदितम्।

७. आनन्दवर्धनः ६५१

कविरयं ध्वन्यालोकाख्यस्य प्रसिद्धस्यालङ्कारग्रन्थस्य प्रणेता ध्वनिसिद्धान्तप्रवर्तक आचार्य

आनन्दवर्धनः (८५० खी०) स्यात्। आनन्दवर्धनः कश्मीरनृपतेरवन्तिवर्मणः सभापण्डित आसीत्। विषमबाणलीला, अर्जुनचरितञ्चेति काव्यद्वयमनेन ध्वन्यालोके स्वकृतित्वेन समुद्धृतम्। अनेन देवीशतकं नाम काव्यं व्यरचीत्यप्युच्यते।

८. उमापत्युपाध्यायः २५८

कवेरस्य नाम्ना पद्यं विद्याकरसहस्रकेऽपि लभ्यते। डा० उमेशमिश्रैर्भूमिकायां (वि० सहस्रकस्य) निर्दिष्टम्—'अयं मैथिल आसीत्। ग्रियर्सनमतानुसारं कतिपये कविरयं खीस्तीयचतुर्दशशताब्द्या आरम्भकाले बभूवेति विश्वसन्ति। अपरे तु मिथिलाधिपते राघवसिंहस्य शासनकाले (खीस्तीयाष्टादशशताब्द्यां) अयमासीदिति वदन्ति। कविनाऽनेन पारिजातहरणं नाम नाटकं संस्कृते मैथिल्याञ्चालेखि।'

लक्ष्मणभट्टस्य कालः सर्वथा खीस्तीयाष्टादशशताब्द्या आरम्भ इत्यालोचितमस्माभिः। लक्ष्मणभट्टेन निर्दिष्टनामा कविरुमापत्युपाध्याय उपर्युक्तो मैथिलः कविः स्यात्।

९. कलशः ३८२

अनन्तराजस्य पुत्रः, हर्षस्य पिता कश्मीरनृपतिः कलशोऽयं (१०८०-१०८८ खी०) क्षेमेन्द्रेण 'सुवृत्ततिलक'नाम्नि ग्रन्थे समुद्धृतः।

१०. कविकङ्कणः ४९१

आशामिश्रस्य पुत्रो मृगाङ्कनाटकस्य कारुण्यलहरीस्तवस्य च रचयिता। 'कवीनां कङ्कणः' इति प्रशस्तिमूलकमिदं नाम, न तु वास्तवम्। 'सदुक्तिकर्णामृते' कङ्कणनामा समुद्धृतः कविः कश्मीरस्य कङ्कणवर्षनामा नृपतिरिति सम्भावितः सुरेशचन्द्रबनर्जीमहाशयैः।

११. कविराजः ४७१, ४८६, ७५९

कस्यचित् कवेरुपाधिरूपमिदमभिधानमिति प्रतीयते। राजशेखरोऽपि कविराज इत्यभिहितः। खीस्तीयद्वादशशताब्दीकस्य लक्ष्मणसेनस्य सभाकविरपि कश्चन कविराज आसीत्। व्यासः कविर्धोयी च कविराजपदवाच्यावास्ताम्।

१२. कवीन्द्रः ३४९

अयमप्यज्ञात एव कश्चित्। कविरयं दशकुमारचरितस्य टीकायाः पदचन्द्रिकायाः पददीपिकाया वा लेखक इति सम्भावयितुं शक्यते। सोऽयं मुगलनृपतिशाहजिहानस्य काले समुत्पन्नः। अथवा महाभारतस्य टीकाकारोऽप्यतन्नामाऽऽसीत्।

१३. कालिदासः १२६, २३५, २६३, २६४, २९२, ३९७, ५०२, ५३२, ७४७।

खीस्तीयचतुर्थशताब्द्यां समुत्पन्नः, रघुवंशादीनां रचयिता कविकुलगुरुः प्रथितकीर्तिर्महाकविः।

१४. कृष्णमिश्रः ५३६

प्रबोधचन्द्रस्य वीरविजयाख्यस्येहामृगस्य च रचयिता, खीस्तीयैकादशशताब्द्या अन्ते समुत्पन्नः।

१५. क्षेमेन्द्रः ३१, ५२१, ७२६

भारतमञ्जर्याद्यनेकेषां ग्रन्थानां निर्मातुर्व्यासदासोपनामकस्य कश्मीरदेशोद्भवस्य कवेः क्षेमेन्द्रस्य

कालः खीस्तीयैकादशशताब्द्यासीत् । राज्ञः कलशस्य (१०६६ खी०) अनन्तनृपतेश्च (१०२८-१०६३ खी०) समयेऽयमासीत् । पी० वी० काणेमहाशयानुसारं, अस्य जन्मकालः ९९० खी० तथा मृत्युकालः १०६६ खीस्तीयाब्दात् परं सम्भावयितुं शक्यते ।

१६. गणपतिः २७, ५४, ११०, १८१, १८२, १९०, १९५, २०८, २१३, २१४, २२१, २४६-२५०, २७४, २७८, २८८, २९३, ३७०, ३७१, ३७८-३८२, ३९५ ३९६, ४००, ४१६, ४२०, ४२५, ४२६, ४२८, ४३३, ४३४, ५०९, ७५४

अस्य कवेरनेकानि पद्यानि पद्यरचनायामुद्धृतानि । रसमञ्जरीकारस्य श्रीभानुदत्तस्य पिता 'गणेश्वर' इत्यप्यभिधीयते स्म । 'तातो यस्य गणेश्वरः कविकुलालङ्कारचूडामणिरि'ति रसमञ्जर्यां (१३८) भानुदत्तः । 'गणेश्वरकवेर्वचोविरचनैकवाचस्पतेरि'ति पद्यरचनायामेतन्नामाङ्कितं पद्यमस्ति (७६८) । अन्यत्र, 'ख' प्रतिस्थे पाठान्तरे भानुकरपितुर्गणपतेरिति (३७१) लिखितत्वात् अस्मिन् पद्ये निर्दिष्टस्य गणपतेः सर्वथा राजशेखरेण महामोदनाम्नि ग्रन्थे स्तुताद् गणपतेर्भेदः सिद्ध्यति । अन्योऽपि गणपतिमिश्रः षोडशशताब्द्यामुत्पन्नः, धारेश्वरस्य पुत्रः गङ्गाभक्तितरङ्गिणीनाम्नो ग्रन्थस्य रचयितेति श्रीमदुमेशमिश्रैर्विद्याकरसहस्रकस्य भूमिकायां निर्दिष्टम् । भानुकरपितुर्गणपतेरपि समयोऽयमेवास्ति ।

१७. गणेश्वरः ७६७, ७६८ (द्रष्टव्यो गणपतिः )

१८. गदाधरः १६५, ४०२ ४३७, ४६२, ५१५, ५२६, ७५५-७५७

कविरयमायुर्वेदग्रन्थानां रचयिताऽप्यासीत् । वकसेनस्य तनयः । सम्भवतश्चिकित्सासारसङ्ग्रहस्य लेखकः । खीस्तीयैकादशशताब्द्यामयमुत्पन्न इति सम्भाव्यते । अनेके गदाधराः सन्ति । 'रसिकजीवनस्य' लेखकाद् भिन्नोऽयं गदाधरः ।' पद्यरचनाया गदाधरः स एव यः 'सदुक्तिकर्णामृते' समुद्धृत इति नास्ति निश्चयः ।

१९. गुणाकरः ३९०, ३९१

अस्य विषये नास्ति विदितम् ।

२०. गोवर्धनः ७६४

गीतगोविन्दकारस्य श्रीजयदेवस्य समसामयिकः । आर्यासप्तशत्या लेखकः । नीलाम्बरस्य सूनुः । 'शृङ्गारोत्तरसत्प्रबन्धरचनैराचार्यगोवर्धनस्पर्धी कोऽपि न विश्रुतः' इत्येभिः शब्दैः श्रीजयदेवेन संस्तुतः । खीस्तीयद्वादशशताब्द्यामुत्पन्नः । बंगदेशशासकस्य लक्ष्मणसेनस्य सभाकविः ।

२१. गौडः १२५

अस्य विषये नास्ति विदितम् ।

२२. जघनचपला ३०८

काचित् कवयित्रीति सम्भाव्यते । 'दुर्दिवसे०' इत्यस्मिन् पद्ये ( ३०८ ) नाम्न उपलम्भात् एतन्नाम्नैव प्रसिद्धिं गता । जघनचपलेति छन्दोविशेषस्याप्यभिधानम् ।

२३. जयदेवः १७१, २३३

भोजदेवात् रामादेव्यां (वामा°, राधा°) जातः । गीतगोविन्दस्य लेखकः । बङ्गशासकस्य

लक्ष्मणसेनस्य सम्भवतः सभाकविः। पश्चिमवंगदेशवर्तिकिन्दुविल्व (केन्दुली) ग्रामस्य वास्तव्यः। उडीसाराज्यवास्तव्योऽयमिति केचित्। ख्रीस्तीयद्वादशशताब्द्या अन्ते त्रयोदशशताब्द्याश्चारम्भकाले समुत्पन्नः।

२४. त्रिविक्रमः १०६, ७६०, ७६१, ७६५, ७६६

राष्ट्रकूटनृपतेरिन्द्रतृतीयस्य (९१५ ख्री०) सभाकविः, नौसरि-शिलालेखस्य नलचम्पूकाव्यस्य च रचयिता। ख्रीस्तीयदशमशताब्द्याः प्रारम्भे समुत्पन्नः।

२५. दण्डी २८३, ५३१, ७१०

अवन्तिसुन्दरीकथाया दशकुमारचरितस्य काव्यादर्शस्य च लेखकत्वेन प्रसिद्धिं गतः। भामहस्य निकटोत्तरकालवर्ती। ख्रीस्तीयपञ्चमशताब्दीकः।

२६. दाक्षिणात्यः ६५, ८३

कश्चिद् दक्षिणदेशवास्तव्यः कविः। लुडविगस्टर्नवाकमहाशयानुसारं, षण्णां गोस्वामिनामन्यतमस्य श्रीवैष्णवगोपालभट्टस्य निर्देशकं नामेदम्। ख्रीस्तीयाष्टमशताब्दीतः पूर्ववर्ती।

२७. देवेश्वरः १३४, ६७६, ६६७-७०४

कविः, वाग्भटस्य पुत्रः, मालवनृपतेः सचिवः। कविकल्पलतायाः काव्यकलापस्य च लेखकः। ख्रीस्तीयचतुर्दशशताब्द्याः पूर्वार्धवर्ती।

२८. धरणीधरः ५७, ६८, १२२

सम्भवतो रसवतीशतकस्य रचयिता कश्चित् कविः। कतिपये ग्रन्थकारा धरणीधरमात्मनो गुरुरूपेण सादरमुल्लिखन्ति। तथा हि, सद्य एव प्रयागस्थैः डॉ० चन्द्रभानुत्रिपाठिमहोदयैः सम्पाद्य प्राकाश्यं नीयमानस्य श्रीरामकीर्तिकुमुदमालानाम्नः खण्डकाव्यस्य रचयितुस्त्रिविक्रमस्य (ख्रीस्तीयसप्तदशशताब्द्या उत्तरार्धेऽष्टादशशताब्द्याः पूर्वार्धे च वर्तमानस्य) गुरुर्धरणीधर आसीदिति तत्रैव टिप्पणीकारेण श्रीदुर्गाप्रसादत्रिपाठिना ग्रन्थान्ते पुष्पिकायां निर्दिष्टमेभिः शब्दैः—"इति श्रीविश्वम्भरात्मसम्भव-श्रीगुरुधरणीधरचरणाराधनसावधान-त्रिविक्रमकृता रामकीर्तिकुमुदमाला सम्पूर्णा।"

धरणीधरोऽयं कुवलयानन्दस्य टीकाया अलङ्कारदीपिकायाः कोविदानन्दस्य च निर्मातुराशाधरभट्टस्यापि गुरुरासीत्। तद् तथा तेनोक्तम्—

शिवयोस्तनयं नत्वा गुरुं च धरणीधरम्।
आशाधरेण कविना रामजीभट्टसूनुना॥

आशाधरस्यापि समयस्त्रिविक्रमस्यैव समयमनुसरति। अस्माभिः सम्पाद्यमानस्य श्रीगोवर्धनमहाकाव्यस्य रचयिता जगन्नाथोऽपि धरणीधरस्य, गुरुरिति स्मरति —

समाश्रये कश्यपवंशसम्भवं गुणान्वितं श्रीधरणीधरान्वितम्।
कृपाकटाक्षाशुगसङ्गमश्रिया श्रितं तमःसैन्यसमूहभिद्धनुः॥१।२

पुष्पिकायामपि—'इति श्रीगोवर्धने महाकाव्ये श्रीमद्गुरुधरणीधरचरणकमलचञ्चरीकश्रीजगन्नाथकविकृते०' धरणीधरस्योल्लेखो लभ्यते।

पद्यरचनायां धरणीधरस्योपलभ्यमानं पद्यं दिलीन्द्रचूडामणेः प्रशस्तिपरम् । स च मुगलसम्राट् शाहजिहान इति सम्भावयितुं शक्यते । अत एव धरणीधरस्य समयः ख्रीस्तीयसप्तदशशताब्द्या मध्यवर्तीति निर्धारयितुं प्रभवामः ।

२९. धूर्तः ३४१

अस्य विषये नास्ति विदितम् ।

३०. नारायणः (वेणीसंहारे) ५३५

अस्य पद्यानि वेणीसंहारस्य नामोल्लेखपुरःसरमुद्धृतानि । ख्रीस्तीयसप्तमशताब्द्यामष्टमशताब्द्यां वोत्पन्नः । भट्टनारायण इत्यप्यभिधीयते कविरयम् ।

३१. निद्रादरिद्रः २६७

कस्यचित् कवेरिदं मूलं नामेत्यत्र सन्देहः । न ज्ञायते कोऽयमिति ।

३२. परिमलः ६७८

यथासम्भवं नवसाहसाङ्कचरितनाम्नो महाकाव्यस्य रचयिता । मृगाङ्कगुप्तस्य तनयः, पद्मगुप्तापराभिधः । परमारनृपतेर्मुञ्जस्य सिन्धुराजस्य चाश्रितः । ख्रीस्तीयदशमशताब्द्या अन्ते समुत्पन्नः ।

३३. पाणिनिः ४७२

अनेन नाम्नाऽनेकेष्वपि सुभाषितग्रन्थेषूद्धृतः कविः । अयमेव वैयाकरणसूत्रकारोऽथवा भिन्न इत्यत्रास्ति विदुषां विवादः । जाम्बवतीविजयस्यापि कर्तृत्वेनायं स्मर्यते । रुद्रटस्य काव्यालङ्कारटीकायां पाणिनेः पातालविजयस्योल्लेखः कृतः । एवमनयोः काव्ययोरेकत्वे भिन्नत्वेऽपि नास्ति मतैक्यं विद्वत्सु । पाणिनिनाम्ना निर्दिष्टानि पद्यानि यत्रकुत्रचिदन्यकविनामाङ्कितानि लभ्यन्ते । पातालविजये लब्धा व्याकरणाशुद्धिर्वैयाकरणपाणिनिमुनिकर्तृत्वमस्य सन्देहास्पदं प्रकुरुते ।

३४. पुरुषोत्तमः पृ० २३, पृ० ६९

कविरयं कदाचित् पाणिनेरष्टाध्यायीसूत्रव्याख्याभाषावृत्तेर्लेखकात्पुरुषोत्तमदेवाद् भिन्नः । अयं बौद्धवैष्णवः कश्चित् कविरासीत् । शरणदेवेन दुर्घटवृत्तौ पुरुषोत्तमदेवस्योल्लेखः कृतः । अस्या वृत्तेः समयः ११७२ खी० इति । अत इतः प्राचीनेन कविनाऽनेन भवितव्यम् ।

३५ बाणः २८४, ७२७

वात्स्यायनगोत्रसम्भवः, हिरण्यबाहोः शोणनदस्य तटवर्तिनि प्रीतिकूटनाम्नि ग्रामे समुत्पन्नः । ख्रीस्तीयसप्तमशताब्द्याः पूर्वार्धे हर्षवर्धनस्य सभाकविः । हर्षचरितस्य कादम्बर्याश्च प्रथितयशा लेखकः । अस्य नाम्ना सुबहूनि पद्यानि सुभाषितसङ्ग्रहेषु लभ्यन्ते ।

३६. बाबूमिश्रः ३२२

अस्य विषये नास्ति विदितम् ।

३७. बिल्हणः १८७, १९९, २२४, २७०, ३८७, ४०१

ज्येष्ठकलशान्नागदेव्यामुत्पन्नः, कश्मीरवास्तव्यः । विक्रमाङ्कदेवचरितमहाकाव्यस्य चौरपञ्चाशिकायाः कर्णसुन्दरीनाटिकायाश्च लेखकः । खीस्तीयैकादशशताब्द्या उत्तरार्धे चालुक्यनृपतेर्विक्रमादित्यषष्ठस्य त्रिभुवनमल्लस्य सभाकविः ।

३८. भर्तृहरिः ३५२, ५५६-५६३, ५८०, ५८१, ६२७, ६४८, ६४९, ७१६, ७१८, ७१९, ७४५. ७४६ ।

नीतिशृङ्गारवैराग्यशतकत्रयस्य कर्तृत्वेन ख्यातिमधिगतः। अस्य विषये किञ्चिद् व्यवस्थितं वक्तुं न शक्यम्। ख्रीस्तीयप्रथमशताब्दीत आरभ्य षष्ठशताब्दीपर्यन्तं कश्चित् कालोऽस्य भवेत्। अस्य नाम्ना लब्धान्येकानि पद्यान्यपरेषां नामाङ्कितान्यपि सुभाषितग्रन्थेषु लभ्यन्ते।

३९. भवभूतिः ५२८

राज्ञो यशोवर्मणः काले ख्रीस्तीयसप्तमशताब्द्याः समाप्तावष्टमशताशाब्द्याः प्रारम्भे च विद्यामानः। मालतीमाधवस्य, महावीरचरितस्योत्तररामचरितस्य च कर्ता।

४०. भानुकरः १०, १४,१६, २३-२५, २८, ३१-३३, ३८,४०, ४५-५७, ५५, ७०-७२, ७९,८०, ८५, ८६, ८९, ९०, ६२, ६३, ६४, १००-१०६, ११२, ११४-११८, १२०, १२१, १३५, १३६, १४६-१५२, १५४-१५६, १६८, १६९, १७४-१७६, १८०, १८१, १८६, १८६, २०७, २०६, २११ २१२, २१६, २२०, २२३, २२५-२२७, २४०-२४५ २७१, २७२, २७६, २७९, २८०, २८६, २८७, २८९, २६४-२९६, २९८ २६६, ३१०, ३११, ३१५-३२०, ३२५, ३३५, ३३६, ३३८ ३३६, ३४७, ३४८, ३५४, ३५५, ३६८, ३६९, ३८५, ३८६, ३६३, ३६४, ४०५, ४०६, ४०७, ४११, ४१७. ४१८, ४२३, ४२४. ४३५, ४४०-४४३, ४४५--४४७, ४४९-४५२, ४५४, ४५६, ४७६, ४७७, ४८०-४८२, ४८८-४९०, ४६७-४६९, ५१०-५१२, ५१७-५२०, ५२६, ५३७ ५३८, ५४५, ५८७, ६२२, ६३१, ६३२, ६३७, ६४७, ६५७, ६५८, ६७४, ६९५. ७२८, ७३६ ७४३, ७४६, ७५०. ७६६, ७७० ।

ग्रन्थेऽस्मिन्नस्य पद्यान्याधिक्येन सङ्कलितानि सन्ति। अयमेव भानुमिश्रः, भानुदत्त इत्यप्युच्यते। अस्य पद्यद्वये वीरभानुनृपतेर्यशोगानमुपलभ्यते। एतेन ख्रीस्तीयषोडशशताब्द्यामुत्पन्नस्य बघेलनृपतेर्वीरभानोरयमाश्रित इत्यवगम्यते। कवेरस्य पितुर्गणेश्वरस्य गणपतेर्वा पद्यानि सङ्ग्रहेऽस्मिन् लभ्यन्ते। निजामशाहस्य प्रशस्तावपि किञ्चिदनेन लिखितम्। अस्य गीतगौरीपतिः कुमारभार्गवीयञ्चेति काव्यद्वयमन्यदस्ति।

४१ भासः २०४, ४८३

स्वप्नवासवदत्तादिनाटकानां प्रणेतृत्वेन प्रसिद्धस्य बाणेनास्य हर्षचरिते स्मरणं कृतम्। कालिदासोऽप्यमुं मालविकाग्निमित्रस्य प्रस्तावनायां निर्दिशति। अस्य त्रयोदश लघुरूपकग्रन्थाः त० गणपतिशास्त्रिमहाभागैः सर्वतः पूर्वं सम्पाद्य प्रकाशिताः। भासस्य लब्धानि नाटकान्यद्यावधि कर्तृत्वादिदृष्ट्या विदुषां विवादास्पदीभूतानि सन्ति। सुभाषितसङ्ग्रहेषु लब्धानि न तावत्पर्याप्तानि किञ्चिन्निर्णेतुम्।

४२. भोगिसूनुर्वेणीदत्तः ३६, ३७, ६६, ७५, ८८, १११

पद्यरचनायाः काव्यमालासंस्करणे कवेरस्य षट् पद्यानि लभ्यन्ते, परमस्माभिरुपलब्धे पाण्डुलिपित्रये क्वचिदपि तानि न सन्ति लिपिबद्धानि। कवेरस्य विषये के० वी० शर्ममहोदयानां

लेखः प्रकाशितोऽस्ति ( आल इण्डिया ओरियंटल कान्फ्रेंस, १९४६ 'वेणीदत्त, सन आफ भोगी ) तत्रान्येषामपि वेणीदत्तेत्याख्याजुषां कवीनां निर्देशः कृतो वर्तते। तदनुसारं, लोहस्य प्रपौत्रो वासुदेवस्य पौत्रो भोगिनः सूनुर्वेणीदत्तनामा ब्राह्मणो बोपदेवस्य शतश्लोक्या भावार्थदीपिकायाष्टीकायाः कर्ताऽऽसीदिति। यथा 'पुष्पिका' वर्तते—"इति श्रीमन्महोपाध्यायवासुदेवात्मजभोगिसूनुना वेणीदत्तकवीन्द्रेण कृतायां शतश्लोकीव्याख्यायां भावार्थदीपिकायां ववाथाधिकारः षष्ठः।" तत्रैव च कवेर्वेणीदत्तस्य प्रशस्तौ पद्यमिदमुपलभ्यते—

तर्के दुस्तर्कयुक्तिर्निखिलनयकृतौ कल्पनाकोविदेन्द्रः
सङ्गीतज्ञानरङ्गः श्रुतिपठनशुचिः सर्वचातुर्यचुञ्चुः।
ज्योतिश्शास्त्राग्रगण्योऽग्रगणितगणितो वैद्यविद्यानवद्यः
साहित्ये सार्वभौमो जगति विजयते वेणिदत्तः कवीन्द्रः॥

अस्यैव कवेः साहित्याब्धिनामा लघुकायः साहित्यग्रन्थस्तंजोरपाण्डुग्रन्थागारे वर्तते। स च तंजोरसरस्वतोमहलपुस्तकालयस्य पत्रिकायां प्रकाशितोऽप्यस्ति। भावार्थदीपिकाव्याख्यायां साहित्याब्धौ च प्रारम्भः समान एव—

वासुदेवसमुद्भूतभाग्यभृद्भोगिसूनुना।
शतश्लोकीविवरणं वेणीदत्तेन तन्यते।
... .... ।

'साहित्याब्धौ' प्रारम्भ एवं लिखितम्—

किं कान्ताकटिकिङ्किणीकलकलैः किं कीर्णकर्णामृतैः
किं वा कोकिलकूजितैः किमतनोः कोदण्डघण्टारवैः।
किं वा तैर्विलसद्विरिञ्चवनितावीणारवाडम्बरै-
र्वेणीदत्तकवेर्विदग्धकविता यद्यस्ति किं वा परैः॥

कवेरस्य तृतीयो ग्रन्थः 'अपर्णाखिलाङ्गवर्णनम्' इत्याख्योऽपि वर्तते। स च त्रिवेन्द्रमनगरस्थे ट्रावंकोरपाण्डुग्रन्थागारे सुरक्षितः। अन्ते च तत्र पद्यमस्ति—

आसील्लोहाभिधानाद् द्विजवरतिलकाद् वासुदेवाभिधान-
स्तत्सूनोर्भोगिनाम्नोऽभवदतुलमतिर्वेणिदत्ताभिधानः।
सोऽयं चक्रेऽङ्गकानां शरदिजशशभृच्चारुसूक्तिस्तुतीर्या-
स्तास्ता भूमण्डले सत्सदसि परिचिताः सन्तु गोत्रेन्द्रजायाः॥

बोपदेवस्य शतश्लोक्या व्याख्यातृत्वेन वेणीदत्तस्य समयं १३०० खीस्तीयाब्दतः आरभ्य सप्तदशखीस्तोयाब्दे समुत्पन्नेन लक्ष्मणभट्टेन पद्यरचनायां वेणीदत्तस्य भोगिसूनोः पद्यानामुद्धृतत्वात् १६५० खीस्तीयाब्दं यावन्निर्धारितवन्तः श्रीशर्ममहोदया।

अत्रेदमवधेयम्—पद्यरचनायाः समुपलब्धे पाण्डुलिपित्रये क्वचिदपि वेणीदत्तस्य भोगिसूनोः पद्यानि नोपलब्धानि, अथ च काव्यमालासंस्करणे मुद्रितानीति विचित्रा स्थितिः। अन्यच्च वैचित्र्यं यद् यानि पद्यानि वेणीदत्तस्य नाम्ना निर्दिष्टानि तानि पूर्वोद्धृतप्रशस्तिपात्रभूतेन कविना रचितानीत्यत्र सन्देह इवोदेति, यतस्तेषु क्वचिदर्थस्यास्पष्टतया, क्वचिद् यतिभङ्गदोषेण क्वचिच्च कवेरशक्तिख्यापक-

प्रयोगवाहुल्येन सन्देहावसरः समुदेति। यच्च शर्ममहोदयैर्वेणीदत्तस्य समयनिर्धारणं लक्ष्मणभट्टस्य पद्यरचनायाः काव्यमालासंस्करणे पद्यानामुपलब्धेराधारेण कृतम्, तदपि न क्षोदक्षमम्। तस्य पद्याना-मस्मदुपलब्धपाण्डुलिपित्रयेऽप्यभावः सर्वथा नैव निराकर्तुं शक्यः। मन्ये केनचित् लिपिकारेणैव तानि पद्यानि तत्र नियोजितानि, न ग्रन्थकारेण लक्ष्मणभट्टेन।

४३. भोजदेवः ६४१

धाराधीश्वरो भोजदेवः खीस्तीयैकादशशताब्द्यां भारतभुवं प्रशशास। अस्य नानाविषयका ग्रन्था उपलभ्यन्ते। काव्येषु रामायणचम्पूः, काव्यशास्त्रे सरस्वतीकण्ठाभरणं शृङ्गारप्रकाशश्च, विराजेते।

४४. भोजप्रबन्धः (बल्लालस्य) ३६६, ३६७, ४८५, ५६८, ५९९, ६०४, ६६५, ७३३

खीस्तीयषोडशशताब्द्या अन्ते सप्तदशशताब्द्याश्चारम्भे समुत्पन्नेन बल्लालेन रचितो भोज-प्रबन्धनामा ग्रन्थः संस्कृतजगति सुतरां विदितः। पद्यरचनायां स्वकीयस्य ग्रन्थस्यैव नाम्ना कवि-रयमुद्धृतः।

४५. महाकाव्यम् (महाकविर्वा) ९८

नास्ति विषयेऽस्मिन् विदितम्।

४६. महानाटकम् १५, १६, ५३, ६०, ७३, ८३, ९७, ४३९

(हनूमतो नाम्नि द्रष्टव्यम्)

४७. महादेवः ६०७

नास्ति किञ्चिद् विदितम्।

४८. माघः १३, ३७२ ४३६

शिशुपालवधमहाकाव्यस्य रचयिता दत्तकसूनुर्महाकविर्माघः खीस्तीयसप्तमशताब्द्यामुत्पन्नः। धनपालक्षेमेन्द्रानन्दवर्धनप्रभृतिभिः सुकविभिः सादरमुद्धृतः।

४९. मुरारिः ५४०, ७५१, ७५२

अनेनानर्घराघवं नाम नाटकमलेखि। मौद्गल्यगोत्रोत्पन्नस्य वृद्धमाङ्खस्य तौतुमात्याश्च तनयोऽयं दशमशताब्द्या अन्तिमभागतः पश्चाद्वर्ती न भवितुमर्हति। दशरूपके धनञ्जयेन पद्यमेतस्यो-द्धृतम्। यथासम्भवमनेन खीस्तीयनवमशताब्द्या मध्यभागे समुद्त्पन्नेन भाव्यम्। रत्नाकरेण हरविजयमहाकाव्ये (३८.६८) मुरारेरुल्लेखः कृतः, राजशेखरात्पूर्वभावित्वेन रूपेण।

५०. मैथिलः ६२, २५६

नास्ति किञ्चिद् विदितम्।

५१. मोरिका २८५

संस्कृतकवयित्रीषु प्रसिद्धा। अस्याः पद्यानि सुभाषितसंग्रहेषु काव्यशास्त्रग्रन्थेषु चोद्धृतानि समुपलभ्यन्ते। इयं संस्कृतस्य कवयित्रीणां मध्ये धनददेवेन परिगणिता—

शीलाविज्जामारुलामोरिकाद्याः
काव्यं कर्तुं सन्ति विज्ञाः स्त्रियोऽपि ।
विद्यां वेत्तुं वादिनो निर्विजेतुं
दातुं वक्तुं यः प्रवीणः स वन्द्यः ॥

५२. रघुपतिः ४६५

नास्ति विदितम् ।

५३. रङ्गनाथः ६६४

नास्ति विदितम् ।

५४. रत्नाकरः १४६, ४०३

राजानकरत्नाकरवागीश्वरः । कविरयं काश्मीरकः, अमृतभानोः पुत्रः, हरविजयमहाकाव्यस्य रचयिता । राजशेखरेण कल्हणेन च समुद्धृतः । वक्रोक्तिपञ्चाशिकाध्वनिगाथापञ्जिके अप्यस्य रचने । अवन्तिवर्मणः सभाकविरयं खीस्तीयनवमशताब्द्या उत्तरार्द्धे समुत्पन्नः । अस्यान्येषु च सुभाषितग्रन्थेषु पद्यान्युद्धृतानि लभ्यन्ते ।

५५. राघवचैतन्यः ७६३

महागणपतिस्तोत्रस्य (काव्यमाला) कविकल्पलतायाश्च (?) लेखकः । शार्ङ्गधरपद्धताव-प्युद्धृतः ।

५६. रामचन्द्रः ६-९, १२, २०, २१, २६, ३०, ३४, ३५, ५६, ६६, ८१, ९६, १९८, २३१, २३२, २५५, ३४४, ३५१, ३७१, ३७६, ४६३, ४६४, ४६७, ६२०, ७५८.

भानुकर इव पद्यरचनायां बहुशः समुद्धृतोऽयं कविः । अयं रामचन्द्रबघेलस्याश्रितः कश्चित् कविरासीत् । अस्य पद्यरचनायामुपलब्धे पद्ये 'वाणीकण्ठाभरण (५६) इत्यत्र रुद्र (राम ?) नाम्नो नृपतेः स्तुतिरुपलभ्यते । रामनृपतिरयं बान्धवगढस्य शासकः वीरभानोः पुत्रः, वीरसिंहबघेलस्य पौत्र आसीत् । सूक्तिसुन्दरेऽपि (१५२) रामनृपतिप्रशस्तौ पद्यमुपलभ्यते । श्रीहरदत्तशर्मभिः रामचन्द्रनामा कविरयं रसिकरञ्जनस्य रोमावलीशतकस्य कर्तेति स्वीकृतम् । कविरयं खीस्तीयषोडशशताब्द्यामासीत् ।

५७. रुद्रः २९१

कविरयं 'काव्यालङ्कारस्य' कर्ता रुद्रटः स्यात् । एतत्सम्भावनातिरिक्तं नास्ति किञ्चिदस्य विषये ज्ञातम् ।

५८. रुद्रचन्द्रः पृ० ८८

अस्य विषये नास्ति विदितम् ।

५९. लक्ष्मणः १-५, ११, २६, ४४, ४८-५३, ६३, ६४, ७४, ७७, ७८, ९५, ११९, १३०, १४१-१४३, १६१, १६२, १६६, १६७, १७७, १७८, १८३, १८४, १९२, १९३, २०

२०६, २१०, २१५, २१६ २२८-२३०, २४०-२४५, २६०-२६२, २७३, २९७, ३०१-३०७, ३१३, ३२८-३३४, ३६५, ३७३, ३८९, ३९९, ४२१, ४२२, ४२७, ४३२, ४३८, ४४४, ४४८, ४५३, ४५५, ४५६, ४५७, ४६०, ४६८-४७०, ४७२-४७५, ४७९, ४८७, ४९२-४९४, ५०७, ५०१, ५०६-५०८, ५१३, ५१४,।५२३-५२५, ५३४, ५३९, ५४१, ५४४, ५४६-५५८, ५८३-५८६, ५८८, ५९० ५९८, ६००, ६०५. ६०६, ६०९, ६१०, ६११, ६१३, ६१६. ६१७, ६२१, ६२३, ६२५, ६२६, ६२९, ६३८, ६३९, ६४५, ६५०, ६५९-६६३, ६६९-६७१, ६८०, ७०५-७०७, ७२९, ७३५, ७४७, ७७१, ७७२

पद्यरचनायाः कर्ता । समयादिविषये ग्रन्थस्य भूमिका द्रष्टव्या ।

६०. लक्ष्मणठक्कुरः २७५

अस्य विषये नास्ति विदितम्

६१. लक्ष्मणसेनः ६५६

बंगनृपतिः, बल्लालसेनस्य पुत्रः, गीतगोविन्दकर्तुः श्रीजयदेवस्याश्रयदाता । खीस्तीयद्वादशशताब्द्यामुत्पन्नः ।

६२. लक्ष्मीधरः २१७

चक्रपाणिविजयमहाकाव्यस्य कर्ता, सम्भवतः शार्ङ्गधरस्य भ्राता । बंगदेशीयः कविः । प्राचीनेषु सुभाषितसङ्ग्रहेषु समुद्धृतः ।

६३. लीलावतीकारः ५३०

अस्य विषये नास्ति विदितम् ।

६४. वररुचिः ५४०

अनेके ग्रन्थकारा अभिधानमेतद् बिभ्रति । दण्डिनः पूर्वमुत्पन्नः कश्चिदालङ्कारिकः, लिङ्गानुशासनस्य कर्त्ता, नीतिरत्नस्य लेखकः, प्राकृतप्रकाशस्य रचयिता, बंगदेशे लब्धायाः सिंहासनद्वात्रिंशिकाया निर्माता च । एवं विक्रमादित्यस्य नवसु रत्नेष्वपि कश्चिदासीद् वररुचिः । पाणिनीयसूत्रेषु वार्तिकसूत्राणां रचयिताऽपि वररुचिकात्यायन एवोच्यते ।

६५. वराहमिहिरः १२४

प्राचीनो ज्योतिःशास्त्रवित्, बृहत्संहिताया बृहज्जातकस्य च लेखकः । यद्यपि विद्वांसोऽस्य समयविषये नैकमत्यमवलम्बन्ते तथापि सामान्येन खीस्तीयपञ्चमशताब्द्यां षष्ठशताब्द्यां वोत्पन्नः परिकल्प्यते । एतस्य प्राप्तशास्त्रीयग्रन्थाकलनेन कवित्वमस्मिन्ननुमातुं शक्यते । अस्य नाम्नि किञ्चिद् वैदेशिकत्वमनुभूयते ।

६६. वाणीविलासः २५२, ३४३, ४८४

अस्य विषये नास्ति विदितम् ।

६७. वामनः ३२६

काव्यालङ्कारसूत्रवृत्तिनाम्नोऽलङ्कारग्रन्थस्य रचयिता । कश्मीरनृपतेर्जयादित्यस्य (७७९-८१३ खी०) सचिवोऽयमित्यत्र कल्हणस्य 'राजतरङ्गिणी'ग्रन्थः प्रमाणम् (४।४९७) ।

६८. वाल्मीकिः २२२, २५३, ४८४

सुप्रसिद्धस्य रामायणस्य रचयिता महर्षिरादिकविः ।

६९. वाहिनीपतिः २३७, ३७७

अस्य विषये नास्ति विदितम् ।

७०. वासिष्ठः ७२०

नाम्नाऽनेन योगवासिष्ठरामायणं वाल्मीकिनिर्मितं (?) अभिधीयते । वेदान्तविषयकोऽयं ग्रन्थः ।

७१. वासुदेवः ४०८

अस्य विषये नास्ति विदितम् ।

७२. विकिटनितम्बा ६१४

अस्या एकमेव पद्यं पद्यरचनायां गृहीतमस्ति भृङ्गान्योक्तिरूपम् । खीस्तीयनवमशताब्द्याः पूर्वार्द्धस्यारम्भ एव समयः इति विद्वद्भिरनुमीयते । यतोऽस्याः पद्यं 'लावण्यसिन्धुरपरैव हि केयमत्रे'त्यादि ध्वन्यालोके श्रीमदानन्दवर्द्धनाचार्यैरुद्धृतम् । आनन्दवर्धनो हि कश्मीरनृपतेरवन्तिवर्मणः (८८०-८८३ खी०) सभायामासीदिति कल्हणस्य राजतरङ्गिणीत एवावगम्यते ।

विधवाया अस्याः पुनर्विवाहः सञ्जात इति भोजनृपतेः शृङ्गारप्रकाशादवगम्यते । रुद्रटस्य काव्यालङ्कारव्याख्यायां नमिसाधुर्लिखति—

"यथा विकटनितम्बायाः पतिमनुकुर्वाणा सखी प्राह—
काले माषं सस्ये मासं वदति शकासं यश्च सकाशम् ।
उष्ट्रे लुम्पति वं वा रं वा तस्यै दत्ता विकटनितम्बा ॥"

अस्याः पद्यान्यन्येषु सुभाषितसङ्ग्रहेषूपलभ्यन्ते ।

७३. विज्जका पृ० ३८

सुभाषितसंग्रहेभ्य एव विदिता काचित्संस्कृतस्य कवयित्री ।

७४. वेणीसंहारम् (नारायणः) १२९, १३३

७५. वैद्यनाथः १९७

अस्य विषये नास्ति विदितम् ।

७६. वंद्यभानुः १३८, २०२

अस्य विषये नास्ति विदितम् ।

७७. व्यासः १२७, १२८

महाभारतस्य पुराणानाञ्च कर्ता भगवान् वेदव्यासः ।

७८. शकवृद्धिः २०१, २०३, २०५

अस्य विषये नास्ति विदितम् ।

७९. शङ्कराचार्यः २१८

ब्रह्मसूत्राणामद्वैतपरभाष्यस्य रचयिता सुमहान् दार्शनिकः ।

८०. शार्ङ्गधरः १९३, ३४२, ६४२

दामोदरस्य सूनुः, राघवस्य प्रपौत्रः, शाकम्भर्या हम्मीरभूपते राजगुरुः, शार्ङ्गधरपद्धतिनाम्नः सुभाषितसङ्ग्रहस्य रचयिता, शिवस्य भक्तः । १३६३ खीस्तीयाब्दे यथासम्भवमनेन शार्ङ्गधरपद्धति-र्निमिता ।

८१. श्रीहर्षः ८२, १०७, १४८, १९१, २५५, २५१, ३५६, ४०६

खीस्तीयद्वादशशताब्द्या उत्तरार्धे श्रीहीरात् मामल्लदेव्यां जातः, नैषधचरितमहाकाव्यस्य प्रथितयशसो रचयिता कविपण्डितः ।

८२. षाण्मासिकः २३८, २३९

न परिचयोऽस्य कवेर्लब्धः । रूपगोस्वामिनः समकालिकेन भाव्यमनेन । पद्यावल्यां वारद्वय-मयमुद्धृतः । खीस्तीयपञ्चदशशताब्द्या अन्ते षोडशशताब्द्याश्च प्रारम्भे भवेदयम् ।

८३. सर्वदासः ४६१

अज्ञातः । सम्भवतो विदग्धमुखमण्डनस्य लेखकः ।

८४. सिल्हणशतकम् ५७०-५७९

कश्मीरदेशोद्भवस्य सिल्हणकवेः शान्तिशतकं नाम काव्यम् । १२०५ खीस्तीयाब्दतः पौर्वकालिकम् ।

८५. सुबन्धुः ७३६

वासवदत्ताख्यस्य गद्यकाव्यस्य लेखकः । सम्भवतः सप्तमशताब्द्याः पूर्वार्द्धे समुत्पन्नः ।

८६. सोमदेवः ५६४-५६९

कश्मीरदेशोद्भवः । गुणाढ्यस्य बृहत्कथाया अनुवादरूपस्य कथासरित्सागरस्य रचयिता । खीस्तीयैकादशशताब्दी ।

८७. हनूमान् १५९

महानाटकस्य ( हनुमन्नाटकापरपर्यायस्य ) रचयितेति परम्परयोच्यते । हनुमत्कविविरचिते खण्डप्रशस्तिनाम्नि काव्येऽपि महानाटकगतानि पद्यानि लभ्यन्ते ।

८८. हरिहरः ६३३

अस्य विषये नास्ति विदितम् ।

[कस्यापि--१८, ४७, ५८, ६२, ६५, ६७, ७३. ८४, ८७, ९१, ९९, १०८, १२३, १३२, १३७, १३९. १४०, १४४, १४५, १४७, १५३, १५७, १५८, १६०, १६३, १६४, १७०, १७२, १७३, १७९, २००, २३४, २३६, २५४, २५७, २५९, २६५, २६६, २६८, २६९, २७७, २८१, २८२, २९०, ३००, ३०९, ३१२, ३१४, ३२२, ३२३, ३३७, ३४०, ३४५, ३४६, ३४९, ३५०, ३५३, ३५७, ३५८-३६४, ३८४, ३९२, ३९८, ४१०, ४१२-४१६, ४२९, ४३०, ४५८, ४७८, ४९५, ४९६, ५०३-५०५, पृ० ९७, ५२२, ५२७, ५३३, ५४३, ५८२, ५८३, ५९१-५९७, ६०१-६०३, ६०८, ६१२, ६१५, ६१८. ६१९, ६२४, ६२८ ६३०, ६३५, ६३६, ६४०, ६४३, ६४४, ६४६, ६५२, ६५३.-६५५, ६६६-६६८, ६७२, ६७३, ६७५-६७७ ६८१-६९४, ६९९, ७०८, ७०९, ७११-७१५, ७१७, ७२१-७२५, ७३०-७३२, ७३४, ७३७, ७३८, ७४४, ७६२]

●●

## द्वितीयं परिशिष्टम्

## टिप्पणकम्

३. सङ्गतेत्यत्र क-ग प्रतिगतः 'कल्पतां' इति पाठो यद्यपि अनुप्रासदृष्ट्या समुचितः प्रतिभाति तथापि कवेर्विवक्षितं निर्मितेर्विश्रान्तिसाधनत्वं सङ्गतेति पाठेनैव दृढतया प्रस्तुतं भवति।

६. उत्क्षिपामीत्यत्र उन्नयामीति सुभाषितरत्नभाण्डागारे पाठः। तुच्छीभवेदित्यत्र तुच्छो भवेदिति तत्रैव पाठः।

९. दूषिका नेत्रयोर्मलम्-इत्यमरः।

१५. 'खण्डप्रशस्तौ' कीकापण्डितस्य पञ्ज्यामुपलब्धा पद्यस्यास्य व्याख्या नाशिष्य इति—वक्ष्यमाणा रामत्रपा जामदग्न्यलज्जा वः युष्माकं शं सुखं पुष्णातु वर्धयतु। इति किम्? भवः महेश्वरः अशिष्यः किं नाभूत्? मादृशशिष्याय सदसद्भावात् वरं तस्य शिष्यरहितत्वमिति भावः। तथा रेणुका मे माता अपुत्रिणी किं नाभवत्? मादृशे पुत्राय सदसद्भावाद् वरं तस्या अपुत्रत्वमित्यर्थः। रेणुकापदेन क्षत्रियमातामहप्रकृतिताऽऽत्मनः सूच्यते। प्रायेण पुरुषाः पार्थक्यं यान्ति। मातामही तनुमिति तत्सादृश्यस्मरणात्। अथ च विश्वं जगत् अकार्मुकं किं नाभूत्? मदीयचापसद्भावापेक्षया वरं विश्वस्याकार्मुकत्वमपीति भावः। कथमिदं सम्भाव्यत इत्याकाङ्-क्षायां लज्जायाः कारणमाह—विप्राणां प्रतिमन्दिरं गृहे गृहे मया सोऽकल्पकदिगीशतया प्रसिद्धो यमोऽपि महिषेण अब्धीनां समुद्राणां मणिगणोन्मिश्राणि सामुद्रिकमुक्ताफलादि सर्वरत्न-सहितानि अम्भांसि नोद्वाहितः। महिषेण हि जलमानाय्यते, तर्हि यमस्य महिषदण्डादिजला-नयनसामग्रीसद्भावे सत्यपि तदकारयता मया शिवशिष्यता क्षत्रमातात्मतया स्वयं धानुष्कतया च प्रथितेन किं कृतमिति त्रपासद्भावः।

गुणविनयस्य सुबोधिन्याम् —

इति एवंरूपा रामत्रपा परशुरामलज्जा वः युष्मान् प्रीणातु 'प्रीञ् कान्तौ तुष्टौ च।' इतीतिकिम्? भवः ईश्वरः अशिष्यः किं नाभूत् यस्य शिष्यत्वेऽपि परकृत्यकरणासमर्थोऽहं जातः; स चेदशिष्योऽभवत्तदा चारु जातमभविष्यत् यतो 'वरं कुशिष्यो न कुशिष्यशिष्यः' इति चाण-क्यवचनात्। अयं भावः, मया यथैव अखिला भूर्दत्ता द्विजेभ्यः एवं यमोऽपि चेदेवं न कार्यते तदा शिवान्तेवासित्वेन किम् तथा रेणुका माता अपुत्रिणी पुत्ररहिता किं नाभूत्। अथ प्राक् सा गर्भ एव किं मामधत्त, चेद् धृतस्तदा किं न गर्भस्रावणेनैव गलितः, यतस्तस्यां समुत्पन्नोऽप्यहं न काञ्चित् परोपकृतिमकार्षमिति। तदा विश्वं अकार्मुकं धनुर्विरहितं किं नाभूत् चेद् विश्वे कार्मुकं नाभविष्यत्तदाऽहं धनुः कथमधास्यं तथा त्वेतत्कथं सम्भाव्यते। अथ लज्जायाः कारणमाह-मया विप्राणां प्रतिमन्दिरं प्रतिगृहं अब्धीनां चतुर्णामपि समुद्राणामम्भांसि मणिगणो-न्मिश्राणि मणिगणैरुन्मिश्राणि संसृष्टानि—व्याप्तानि दण्डाहतेन महिषेण कृत्वा यमोऽपि नोद्वाहितः, इति रामत्रपा वः प्रीणातु इति भावः।

